# ध्वनिवक्रोक्तिपद्धत्योः तारतम्यसमीक्षा।

**SUBMITTED BY**
**SHAMEEJA. P**

AS PART OF LIBRARY FELLOWSHIP 2003-04
UNDER

**INDIAN COUNCIL FOR CULTURAL RELATIONS**
(MINISTRY OF EXTERNAL AFFAIRS)

INDRAPRASTHA ESTATE, NEW DELHI

# आमुखम्।

"ध्वनिवक्रोक्तिपद्धत्योः तारतम्यसमीक्षा" इत्ययं प्रबन्धः आई.सि.सि.आर. लैब्ररीफेलोषिपस्य पूरणार्थं समर्पितो भवति।

वाङ्मयस्य विचित्रता अनन्ता एव। शब्दार्थानां अनन्ततां विचित्रतां च संस्कृतकाव्यशास्त्रकाराः ज्ञातवन्तोऽसीत्। तत्र अन्तर्भूतस्य सौन्दर्यस्यानावरणाय आस्वादकहृदये तस्य निवेशनाय च यत्नः अलङ्कारशास्त्रकारा आचार्यैः कृतः। सहृदयहृदयेष्वाह्लादजननं तस्याह्लादस्य स्वरूपनिर्णयं च आसीत् आलङ्कारिकाणां लक्ष्यम्। तेषां मते साहित्यस्य परमप्रयोजनं सहृदयहृदयाह्लादकत्वमेव। उपदेशप्रदानत्वादीनि अन्यानि प्रयोजनानि शास्त्रद्वाराऽपि सिद्ध्यन्ति। किन्तु शास्त्रे प्रीतिः नास्ति, काव्ये त्वस्ति च। तदेव काव्यस्य काव्यस्य शास्त्रादुत्कृष्टम्। एवं प्रीतिद्वारा व्युत्पत्तिरेव साहित्यप्रयोजनं इति वक्तुं शक्यते।

श्रीशङ्कराचार्यसंस्कृतसर्वकलाशालायाः कालटि मुख्यकेन्द्रस्थाः तिरूर प्रादेशिककेन्द्रस्थाः च साहित्याध्यापकाः भवन्ति अस्य प्रबन्धस्य मार्गनिर्देशकाः। तेषां निर्देशानुरोधो विचारं कृताऽहम्। विषयेऽस्मिन् अमूल्योपदेशैः मम साहाय्यमाचरितवद्भ्यः आचार्येभ्यः गुरुभ्यः प्रोग्राम् डयरक्टर श्रीमति श्रीबालामिश्रायाः च मम कृतज्ञतां प्रकाशयामि॥

प्रमीजा - पि,

कालामबुबा

15-12-2003

# विषयसूची ।

प्रथमः अध्यायः।

काव्ये आत्मत्वकल्पना।

काव्यपठनात् आनन्दानुभूतिः जायते इति सर्वैः अङ्गीक्रियते। अस्याः अनुभूतेः स्रोतः कुतः? काव्ये काव्यत्वाधायकः अंशः कः? अथवा काव्यस्य प्रधानघटकाः के? प्रश्नानेतान् समाहितुमुद्युक्ताः भारतीयकाव्यमीमांसकाः स्वस्वदर्शनानुसारं विभिन्न-मतानि आविष्चक्रुः। तानि एव रस- अलङ्कार- गुण- रीति- ध्वनि- अनुमान - वक्रोक्ति- औचित्यादि पद्धतित्वेन व्यवह्रियन्ते।

विविधविद्यापारङ्गताः विद्वांसो विदन्ति यत् संस्कृतशास्त्राणामितिहासे साहित्यशास्त्रस्य महद्योगदानं विद्यते। साहित्यशास्त्रस्य मूलं वेदेषूपलभ्यते। तस्मात् तेष्वपि अलङ्कारस्य अवस्थितिः अस्ति। साहित्यशास्त्रस्य योऽसौ रससम्प्रदायः मुनिना भरतेन प्रवर्तितः सोऽपि नाट्यशास्त्रे वर्णितत्वात् पञ्चमवेदाख्यां तु भवत्येव। अस्मिन् शास्त्रे एतदतिरिक्ताः त्रयः सम्प्रदायाः समये समये प्रवर्तिताः सन्ति। तेषु अलङ्कार-सम्प्रदायस्य प्रवर्तकाः भामह- उद्भट- रुद्रटादयो महनीयाः आचार्याः सन्ति, तथैव दण्डिवामना-भ्यामुद्भावितः, गुणसम्प्रदायः, एवमेव आनन्दवर्ध-नाचार्याभिनवगुप्ताभ्यां प्रवर्तितः ध्वनिसम्प्रदायः च जगद्विदितोऽस्ति।

अलङ्कारशास्त्रं कदा केन प्रथम-माविष्कृतं इति निर्णेतुं न शक्यते अस्माभिः। परन्तु प्रसिद्धेषु सर्वेषु अलङ्कारनिबन्धेषु कालिदासकृतेरुदाहरणात् कालिदासादुत्तरकाल

एव उस्य

एव उस्य बाहुल्येन चर्चा अजनीति संभाव्यते क्रिस्तुशकात् प्राक्स्थितकाव्यलक्षणग्रन्थाः अद्य-पर्यन्तं न प्राप्ताः।

भारतदेशीयाः पाश्चात्यवत् अलङ्कारविभजना (Rhetomic), काव्यमीमांसा (Poetics), सौन्दर्यदर्शनादि च (Easthetics) इति पृथक् न उक्त्वा एकस्मिन्नेव सूत्रे निबन्धवन्तः। काव्यमीमांसायामेव तेषामन्तर्भावः। अत एव जगन्नाथपण्डितेनोक्तम्- 'रसगङ्गाधरनाम्नीं करोति कुतुकेन काव्य-मीमांसाम्'(1) इति।

भरतादि आनन्दपर्यन्तं प्रायः आल-ङ्कारिकेषु बहवः आत्मान्वेषणनिरताः। परन्तु 'इदमित्थं' इति निश्चितरूपेण आनन्दवर्धनाचार्यैः एव निर्धारितम्। तच्च मम्मट- विश्वनाथ - जगन्नाथ - अभिनवगुप्तपादाचार्यैः अङ्गीकृत्य स्वीकृतत्वात् तदेव काव्यात्मान्वेषणे अन्तिम-सिद्धान्तोऽभवत्।

भामहः अलङ्कारशास्त्रमूर्धन्यः। सः महाकाव्यस्वरूपनिरूपणावसरे :-

"सर्गबन्धो महाकाव्यं महतां च महच्च यत्।
अग्राम्यशब्दं अर्थ्यं च सालङ्कारं सदाश्रयम्॥
मन्त्रदूतप्रयाणाजिनायकाभ्युदयैश्च यत्।
पञ्चभिः सन्धिभिर्युक्तं नातिव्याख्येयमृद्धिमत्।
चतुर्वर्गाभिधानेऽपि भूयसाऽर्थोपदेशकृत्।
युक्तं लोकस्वभावेन रसैश्च सकलैः पृथक्।(2)

(1) रसगङ्गाधरः।- I-1

(2) काव्यालङ्कारः। I- 19,20,21

इति वदन् अलङ्कार रसयोः पृथक्तत्वं स्पष्टतया जानन्नपि रस एव काव्यस्यात्मा इति भामहस्य केवलं 'शब्दार्थौ सहितौ काव्यम्' इति काव्यस्वरूप उक्तवान्। एवं अलङ्कार एव काव्यस्यात्मा इति भामहस्य, एवं तदनुसरिणः ये सन्ति तेषां च अभिप्रायः।

साहित्यार्थं सुधासिन्धोः सारं उन्मीलयाम्यहम् इति उद्घोष्य प्रवृत्तः कुन्तकः भामहस्य वाक्यमेव स्वीकृत्य विशिष्टतया प्रोक्तवान्-

"शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि।
बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि॥"(3)

इति उक्त्वा वैदग्ध्य भङ्गी-भणिति स्वभावां बहुविधां वक्रोक्तिमेव प्राधान्यात् काव्यजीवितं इति उक्तवान्। समस्तध्वनिप्रपञ्चः तेन उपचार-वक्रतादिभिः स्वीकृतः। काव्यं केवलं उक्तिवैचित्र्य-जीवितं न तु व्यङ्ग्यार्थजीवितं इति तस्याभिप्रायः।

"शरीरं तावदिष्टार्थव्यवच्छिन्नापदावली काव्यम्।"(4) इति उक्तवता दण्डिना 'अर्थविशिष्ट-शब्दस्य काव्यशरीरत्वम्' अभिमतम्। 'काव्यशोभा-करान् धर्मान् अलङ्कारान् प्रचक्षते'(5) इति तस्य अभिप्रायः।

रुद्रटस्तु गुण-दोष- अलङ्काराणां लक्षण-लक्ष्यप्रदर्शनानन्तरं अन्ते रसानामेव काव्ये मूर्धन्यतां प्राह। 'तस्मात् तत्कर्तव्यं यत्नेन महीयसा रसैर्युक्तम्'(6) इति।

(3) वक्रोक्तिजीवितम्।-I-17, (5) काव्यादर्शः। II-1
(4) काव्यादर्शः। I-10, (6) काव्यालङ्कारः।-12-2

तदनन्तरागतेन वामनेन 'रीतिरात्मा काव्यस्य' इत्युक्तम्। 'विशिष्टपदरचनारीतिः, विशेषो गुणात्मा सा त्रेधा। वैदर्भी-गौडीय-पाञ्चाली चेति।'(7) अन्यञ्च 'काव्यशोभायाः कर्तारो धर्माः गुणाः तदतिशयहेतवस्तु अलङ्काराः, पूर्वे नित्याः।'(8) 'काव्यं ग्राह्यमलङ्कारात् सौन्दर्यमलङ्कारः।'(9) इत्युक्त्वा रीतेः काव्यात्मस्थानं दत्तम्। काव्यस्य आत्माविष्करणे उद्यतालङ्कारिकेषु वामन एव प्रथमः।

आनन्दवर्धनस्तावत्- 'शब्दार्थशरीरं तावत्काव्यम्' इत्यारभ्य काव्ये वाच्यार्थापेक्षया अधिकचमत्कारजनकसहृदयैः आस्वाद्य प्रतीयमानव्यङ्ग्यविशेषः अस्त्येव। स एव ध्वनिः। स च ध्वनिः ध्वनन-द्योतन-व्यञ्जनादिशब्दाभिधेयः, अभिधा-तात्पर्य-लक्षणाख्यव्यापारत्रयोत्तीर्णः, व्यञ्जनाव्यापारप्रधानः वस्त्वलङ्काररसादि लक्षणश्च।

"प्रतीयमानं पुनरन्यदेव, वस्त्वस्तिवाणीषु महाकवीनाम्।
यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु॥"(10)

यथा हि अङ्गनासु लावण्यं नाम अवयवसंस्थानाभिव्यङ्ग्यं अवयवव्यतिरिक्तं धर्मान्तरं विद्यते, तद्वत् काव्येऽपि वाच्यादन्यद् जस्त्यस्ति। स एव ध्वनिरिति

(7) काव्यालङ्कारसूत्रवृत्तिः। 6,7,8,9

(8) Ibid 1,2,3

(9) Ibid 1,2

(10) ध्वन्यालोकः। I-4

कथ्यते। ध्वनिपदस्य नानार्थाः विद्यन्ते। अनेन पदेन एषः अर्थः ध्वन्यते इत्यत्र व्यञ्जकशब्दः। ध्वनतीति ध्वनिः इति व्युत्पत्तिः क्रियते चेत् तदा व्यङ्ग्यार्थः। ध्वननं ध्वनिः इति विभागं क्रियते चेत् तदा व्यञ्जनाव्यापारः इत्यर्थो भवति।

उक्तं च मम्मटेनापि - 'इदमुत्तमं अतिशयिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः।' इति।

रसस्य आविष्कारस्तु प्राचीनैरेव कृतं आसीत्। परन्तु ते काव्यशोभाकारकान् सर्वान् हेतून् अपि अलङ्कारमिति समाख्यातवन्तः। कुन्तकोऽपि 'ग्रन्थस्यास्य अलङ्कार इत्यभिधानम्।' इत्यवदत्। एवं प्राचीनालङ्कारिकग्रन्थानां मुख्यविषयस्तावत् अलङ्कार-गुण-दोष-रीतिविवेचना एव। उक्तं च भामहेन 'न कान्तमपि निर्भूषं विभाति वनितामुखम्'(11) इति। जयदेवस्तु इतोऽप्यग्रतो गत्वा -

"अङ्गीकरोति यः काव्यं शब्दार्थौ अनलङ्कृती।
असौ न मन्यते कस्मात् अनुष्णं-अनलं-कृती॥"

इत्युक्त्वा अलङ्कारस्य औन्नत्यं दर्शितवान्। प्राचीनानां मते 'रससत्वे रसवदलङ्कारः'; नवीनास्तु रसस्य अप्राधान्ये रसवदलङ्कारः इति वदन्ति। एवं प्राचीनानां धारणतया अस्य शास्त्रस्य नाम अपि 'अलङ्कारशास्त्रं' इत्यभवत्।

(11) काव्यालङ्कारः। I-13

परन्तु नव्याः रसस्यैव तत्रापि रसध्वनेः एव उत्तमोत्तमस्थानं दत्तवन्तः। काव्यस्य केनचिद्रसेन भवितव्यम्। रसो व्यङ्ग्यः। रस एव काव्यस्यात्मा भवितुमर्हति। नव्यलाक्षणिकाः काव्यस्वरूपं एवं निर्धारितवन्तः। तथाहि, शब्दार्थौ तावत् काव्यस्य शरीरम्। रसादिश्च आत्मा। शौर्यादिवत् माधुर्योजप्रसादादिगुणाः। काणत्व- खञ्जत्व- कुब्जत्व- बधिरत्ववत् दोषाः। वैदर्भी- गौडीयपाञ्चालीप्रभृतिरीतयः अवयवसंस्थानविशेषवत्। अनुप्रास- उपमा- रूपक- दीपकादि अलङ्काराः कटककुण्डलादिवत् इति।

ध्वन्यालोकलोचने अभिनवगुप्तपादाचार्याः एवं वदन्ति- 'शब्दार्थशरीरं तावत्काव्यम्' इति यदुक्तं तत्र शरीरग्रहणादेव केनचिदात्मना भवितव्यम्। शब्दस्तावत् शरीरभागे संनिविशते। सर्वजनसंवेद्यधर्मत्वात् स्थूलकृशादिवत्। अर्थः पुनः सकलसंवेद्यो न भवति। न हि अर्थमात्रेण काव्यस्य व्यपदेशः; लौकिकवैदिकवाङ्मयेषु तदभावात् इति।

साहित्यदर्पणकारो विश्वनाथस्तु 'वाक्यं रसात्मकं काव्यं' इति काव्यस्वरूपमुक्त्वा रस एव काव्यात्मा साररूपतया जीवनधायको यस्य, तेन विना तस्य काव्यत्वाभावात्। 'रस्यते इति रसः' इति व्युत्पत्तियोगात् 'भावतदाभासादयोऽपि गृह्यन्ते'(12) इति व्याख्यातवान्। पण्डितराजजगन्नाथस्तु 'यस्तु रसवदेवकाव्यम्' इति साहित्यदर्पणे निर्णीतं तन्न। वस्त्वलङ्कारप्रधानानां काव्यानां अका-

(12) साहित्यदर्पणम्। I २१-२२

व्यत्वापत्तेः। न चेष्टापत्तिः महाकविसम्प्रदायस्य आकुलीभावप्रसङ्गात्। अत एव "रमणीयार्थप्रतिपादकशब्दः काव्यम्।"(13) इति नूतनं काव्यलक्षणं अभ्यधात्।

एवं काव्ये केवलं शब्दस्य, अर्थस्य वा आनन्दजनकत्वं नास्ति। शब्दार्थौ यत्र गुणीभावितात्मानौ कमप्यर्थविशेषं अभिव्यङ्क्तः तदेव आनन्दजनकम्। तद्विषये विप्रतिपत्तयः वर्तन्ते।

एवं प्राचीनालङ्कारिकाः भामहः तन्मतानुसारिणश्च 'निरलङ्कारौ शब्दार्थौ काव्यं भवितुं नार्हतः।' ...... न कान्तमपि निर्भूषं विभाति वनितामुखम्' 'सदलङ्कारनिर्मुक्ता विधवेव सरस्वती' इत्युक्त्वा अलङ्कारसंयुक्तमेव उत्तमकाव्यमिति वदन्ति। काव्यगुणगणसंश्लिष्टमेव उत्तमकाव्यमिति दण्डिवामनौ। रसमेव काव्यात्मानं आस्वाद्यत्वेन प्रतिजानीते नव्याः- आनन्दवर्धनः एवं तन्मतानुयायिनः मम्मट - हेमचन्द्र - विश्वनाथ - जगन्नाथादयः।

तदेवं रसाः काव्यात्मत्वेन अवस्थिताः, शब्दार्थौ च शरीररूपतया। यथा हि ललनामणिमयमण्डलमण्डनमण्डिता, सकललोक - ललनाकुलललामभूताऽपि निर्जीवा चेत् न शोभते तद्वत् काव्यमपि जीवभूतरसेन विना न शोभत एव। रस एव काव्यात्मा। 'रसो वै सः', 'रसं ह्येवायं लब्ध्वा आनन्दी भवति' इत्यादि श्रुतिवाक्यानुसारेण रसः ब्रह्मानन्दसहोदरः। रत्याद्यवच्छिन्नभग्नावरणाचिदेव रसः। स च विभावादि जीवितावधिः पानकरसन्यायेन चर्व्यमाणः पुर इव परिस्फुरन्, हृदयमिव प्रविशन्, सर्वाङ्गीणमिव आलिङ्गन्, अन्यत् सर्वं

...धत्., ब्रह्मानन्द आ

(13) रसगङ्गाधरः। - I

तिरोदधत्, ब्रह्मानन्द आस्वादमिव अनुभावयन् अलौकिक चमत्कारकारी। अतः कविना सर्वात्मना रसपरतन्त्रेण भाव्यम्। केवल इतिवृत्तवर्णनेन आचन्द्रार्कयशः न लभ्यते।

एवं वस्तु-अलङ्कार-रसात्मकतया प्रतीयमानार्थस्यैव सहृदयश्लाघ्यत्वात् काव्यात्मत्वं निर्णीतम्।

---

द्वितीयः अध्यायः।

ध्वन्यालोकः आनन्दवर्धनस्य।

ध्वन्यालोको नाम ग्रन्थः भारतीय साहित्य-लोके अत्युन्नतं स्थानं अलङ्करोति। ध्वनिप्रकाशेण काव्ये अन्तर्भूतानां सर्वघटकानां प्रकाशनं च ध्वन्यालोकेन कृतम्। तथा हि, व्याकरणे पाणिनेः सूत्रग्रन्थस्य, वेदान्ते वेदान्तसूत्रस्य च स्थानं आवहति अलङ्कार-साहित्ये ध्वन्यालोकः इति पण्डिताः वदन्ति।

ध्वन्यालोके चतुर्भिरुद्योतैः आद्ये ध्वनि-सिद्धान्तप्रस्तावनानन्तरं तस्य विमतपक्षान् अनेकप्रकारैर्युक्तिभिः खण्डयित्वा सर्वभूषणविरहितायाः अङ्गनायाः सर्वभूषणैः भिन्ना लावण्यनामक सौन्दर्यविशेषो यथा, तथा काव्यस्यापि किञ्चित्प्रकार सौन्दर्यविषयो अस्तीति ख्यापयति। द्वितीये तु ध्वनिप्रभेदानां तस्योपभेदानां च सविस्तरविवरणेन समं काव्यगुणानां संक्षिप्तवर्णनं अपि कृतम्। तृतीये तु पदवाक्यपदांशप्रबन्धेभ्यः व्यज्यमान ध्वनेः प्रकाशतायाः प्रतिपादनं, रसानां परस्परविरोधाविरोधानुपपत्तिवर्णनं च कृतम्। चतुर्थोद्योते तु ध्वनेः गुणीभूतव्यङ्ग्यस्य च विधानेन कविसृष्टौ चमत्कारातिशयत्वसिद्धिः, तत्सन्निवेशनेन पूर्वकविवर्णि-तार्थेष्वपि नवीनत्वचमत्कारत्वयोः दर्शनं च सुकरः इति विशदयति।

आनन्दवर्धनाचार्यः। :-

आनन्दवर्धनाचार्यः तस्य ध्वन्यालोक नाम एकेन ग्रन्थेन संस्कृतसाहित्यशास्त्रलोके प्रथमस्थानं अलङ्करोति। आनन्दवर्धनाचार्यः, कविः, निरूपकः, दार्शनिकः च भवति। तस्य ग्रन्थः भारतीयकाव्यशास्त्रग्रन्थानां मध्ये अतिप्रधानं स्थानं आवहति। अन्धकारभरितसंस्कृतसाहित्यलोकाय ध्वनेः प्रकाशं आनयन् आनन्दवर्धनः भारतीयकाव्यशास्त्रलोके प्रथमस्थानं अलङ्करोति।

आनन्दवर्धनाचार्यस्य प्रधानग्रन्थाः। :-

आनन्दवर्धनेन देवीशतकं नाम काव्यं पार्वतिं स्तुत्वा रचितम्। पुनः अर्जुनचरितमहाकाव्यं नाम एकं महाकाव्यं अस्ति। आनन्दवर्धनः प्राकृतभाषेऽपि निपुणः भवति। सः विषमबाणलीला, हरिविजयः इति नाम्नौ द्वौ प्राकृतग्रन्थौ रचितवान्। अद्वैतवेदान्तप्रतिपादकः तत्वालोकः, प्रमाणविनिश्चयटीकायाः व्याख्यानं च आचार्येण रचितौ दार्शनिकग्रन्थौ।

ध्वनिः। :-

काव्यस्य प्रधानभूतस्य अङ्गित्वेन स्वीकृतस्य आत्मस्वरूपस्य च ध्वनेः स्वरूपं प्रदर्शितवान् आनन्दवर्धनः। "काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्वः" (1) इति आनन्दवर्धनेन उक्तम्। अत्र ध्वनिः काव्यस्यात्मा भवतीति सर्वैः पण्डितैः

(1) ध्वन्यालोकः। - I -।

अङ्गीकृतं इति अवगन्तुं शक्यते। ध्वनेः एतत् स्वरूपं स्वीकृत्यैव पश्चात्कालीनैः मम्मटादिभिः पण्डितैः काव्यस्य लक्षणं निरूप्यते। "इदमुत्तममतिशयिनी व्यङ्ग्ये वाच्यात् ध्वनिर्बुधैः कथितः।"[2] इति काव्यप्रकाशकारस्य मम्मटस्य लक्षणं प्रसिद्धमेव। अत्र मम्मटः ध्वनिकाव्यस्य उत्तमकाव्यं इति अपरनाम दत्तवान्।

आनन्दवर्धनस्य ध्वनिसिद्धान्तस्य मूलरूपं व्याकरणदर्शने द्रष्टुं शक्यते। तत्र शब्दः ध्वनिस्फोटश्चेति द्विधा विभक्तः। तत्र उच्चार्यमाणः वर्णः भवति ध्वनिः। तेन ध्वनिना अखण्डस्फोटस्य अभिव्यक्तिः च सम्भवति इति तेषां मतम्। एतत् व्यङ्ग्यव्यञ्जकत्वं स्वीकृत्यैव तेन ध्वनिसिद्धान्तः आविष्कृतः।

यत्र उपसर्जनीकृतस्वार्थौ अर्थः शब्दो वा प्रतीयमानार्थं व्यङ्क्तः स काव्यविशेषः ध्वनिरिति सूरिभिः कथितः इति आनन्दवर्धनाचार्यः ध्वनेः स्वरूपं प्रकाशयति। यथा -

"यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः।"[3]
इति।

अनन्तरं ध्वनिः त्रिधा विभज्यते- वस्तु- अलङ्कार- रस इति। तत्र वस्त्वलङ्कारध्वनौ रसध्वनावेव पर्यवसितः।

(2) काव्यप्रकाशः - I-6

(3) ध्वन्यालोकः I- 13

ध्वनेः भावपरः रूपपरश्चेति अर्थ द्वयमस्ति। भावार्थे ध्वनिः रस एव। एवं सति ध्वनिरयं भरतमुनेः रसवादस्य पुनराविष्कार एवेति वक्तव्यम्। "काव्यस्यात्मा ध्वनिः" इति वाक्यं 'काव्यस्यात्मा रस' इति परिष्क्रियते चेदपि आनन्दवर्धनाचार्यस्य कोऽपि विरोधो न स्यात्।

"काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा।
क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः॥" (4)

अनेन श्लोकेन काव्यात्मत्वं इतिहासद्वारा दर्शयति ध्वनिकारः। स एवेत्यनेन रसध्वनिः सूचितः। अतः रस एव वस्तुतः काव्यात्मा इति सिद्ध्यते। तथा चाह ध्वनिकारः "काव्यस्य विविधवाच्यवाचक-रचनाप्रपञ्चचारुणः स एवार्थः सारभूतः।" (5) इति।

सकलसत्कवीनां काव्येषु सारसर्वस्वरूपेण वर्तमानं तत्वं भवति ध्वनिः। रामायणमहाभारतादिष्वपि अस्य ध्वनेः अस्तित्वं द्रष्टुं शक्यते। काव्यचारुत्वहेतुभ्यः सकलेभ्यः काव्यधर्मेभ्यः व्यतिरिक्तं तैः प्रतीतं च भवति ध्वनितत्वम्। तद्वस्तुतत्वं निष्यन्दमाना महाकवीनां सरस्वती अलोकसामान्यं परिस्फुरन्तं प्रतिभाविशेषं अभिव्यनक्ति। यदाह आनन्दवर्धनः :-

(4) ध्वन्यालोकः - I-5

(5) ध्वन्यालोकः - I- p. 89

"सरस्वती स्वादु तदर्थवस्तु
निष्यन्दमाना महतां कवीनाम् ।
अलोकसामान्यमभिव्यनक्ति
परिस्फुरन्तं प्रतिभाविशेषम् ॥" (6)

सोऽर्थो यस्मात्केवलं काव्यार्थतत्वज्ञैरेव ज्ञायते । यदि च वाच्यरूप एव असौ अर्थः स्यात् तद्वाच्यवाचकः रूपपरिज्ञानादेव तत्प्रतीतिः स्यात् । अथ च वाच्यवाचकलक्षणमात्रकृतश्रमाणां काव्यतत्वार्थभावनाविमुखानां स्वरश्रुत्यादिलक्षणमिवाऽप्रगीतानां गान्धर्वलक्षणविदामगोचर एव असौ अर्थः । एवं प्रतीयमानस्य अर्थस्य सद्भावसाधनं सूचयति । यथा –

"शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते ।
वेद्यते स तु काव्यार्थतत्वज्ञैरेव केवलम् ॥" (7)

इति ।

ध्वनतीति ध्वनिः ।

ध्वनतीति ध्वनिः । अनेन व्यञ्जकः शब्दः अर्थः च ध्वनिः । ध्वन्यते असौ अर्थः इति व्यङ्ग्यः अर्थः ध्वनिः । ध्वननं ध्वनिः, अनेन व्यापारः ध्वनिः, ध्वनिः काव्यविशेषः इत्येवं शब्दार्थव्यापाररूपत्वेन ध्वनेः स्वरूपं पञ्चधा प्रकाशितः ।

ध्वनेः प्राधान्याप्राधान्यं

(6) ध्वन्यालोकः I- 6

(7) ध्वन्यालोकः I- 7

काव्यविभजनं - ध्वनेः प्राधान्याप्राधान्येन :-

ध्वनेः प्राधान्याप्राधान्यं समवेक्ष्य काव्यं त्रिधा विभज्यते। यथा हि, ध्वनिः, गुणीभूतव्यङ्ग्यं, चित्रकाव्यमिति। व्यङ्ग्यार्थस्य वाच्यार्थापेक्षया सहृदयहृदयाह्लादकत्वमस्ति चेत् तत् ध्वनिकाव्यम्। वाच्यार्थः यत्र प्रधानतया भासते तत् गुणीभूतव्यङ्ग्यकाव्यम्। व्यङ्ग्यस्य अभावे वाच्यमात्रस्य यत्र प्राधान्यं वर्तते तत् चित्रकाव्यम्। तदनन्तरं ध्वनेः अनेकाः भेदाः आनन्दवर्धनेन प्रतिपादिताः।

ध्वनिलक्षणस्य दलप्रयोजननिरूपणम्। :-

ध्वनिलक्षणस्य दलप्रयोजननिरूपणे 'वा' इति शब्देन व्यञ्जकत्वप्राधान्यविकल्पः विवक्षितः। व्यङ्ग्यस्यार्थस्य व्यञ्जकत्वं शब्दार्थयोः उभयोः अपि अस्ति। किन्तु लक्षणामूलध्वनौ शब्दः प्रधानव्यञ्जकः। अभिधामूलध्वनौ अर्थः च एवं कुत्रचित् अर्थस्य इति दर्शयितुमेव 'वा' शब्दः प्रयुक्तः।

'उपसर्जनीकृतस्वार्थौ' इति शब्देन उपसर्जनीकृतस्वः अर्थः, उपसर्जनीकृतार्थः शब्दः च। उपसर्जनीकृत नाम अप्रधानीभूतः। तेन अस्य पदस्य अयमर्थः - वाच्यः अर्थः आत्मानम् अप्रधानीकुर्वन्, शब्दः वाच्यमर्थम् अप्रधानीकुर्वन् इति। अस्य अयमर्थः - ध्वनौ सर्वदा सर्वथा च वाच्यः अप्रधानः। व्यङ्ग्यः एव प्रधानः। वाच्यवाचकौ व्यङ्ग्यपर एव स्युः। तदुक्तं -

"तत्परावेव शब्दार्थौ यत्र व्यङ्ग्यं प्रति स्थितौ।
ध्वनेः स एव विषयो मन्तव्यः सङ्करोज्झितः॥"(8)

समासोक्त्यादिषु अलङ्कारेषु व्यङ्ग्यार्थः अस्ति किन्तु तस्य प्राधान्यं नास्ति। एतादृशे विषये ध्वनित्वं माभूत् इति उपसर्जनीकृतस्वार्थौ इति पदं प्रयुक्तम्। व्यङ्क्तः इति शब्देन व्यञ्जयतः, स्फुटीकुरुतः इत्यर्थः। अनेन द्विवचनेन शब्दार्थयोः उभयोः अपि व्यञ्जकत्वं अस्ति इति प्रदर्शितम्। तेन अयं सम्पिण्डितोऽर्थः यस्मिन् काव्यसन्दर्भे वाच्यः अर्थः आत्मानं न्यग्भूतकुर्वन्, शब्दो वा वाच्यमर्थं न्यग्भूतकुर्वन् रसादिलक्षणं व्यङ्ग्यमर्थं व्यनक्ति काव्यविशेषः ध्वनिः। व्यङ्ग्योऽर्थो ध्वनिः। व्यञ्जको वाच्यवाचकौ ध्वनिः। व्यञ्जनाव्यापारोऽपि ध्वनिः।

'सूरिभिः कथितः' इति शब्देन इदं न ममैव मतम्। किन्तु विद्वदुपज्ञा इयमुक्तिः इति सूचयति। प्रथमे विद्वांसः वैयाकरणाः तैश्च स्फोटसिद्धान्तव्याख्यानवसरे श्रूयमाणः वर्णः ध्वनित्वेनोक्ताः।

"यः संयोगवियोगाभ्यां करणैरुपजन्यते।
सः स्फोटः शब्दजाः शब्दा ध्वनयोऽन्यैरुदाहृताः॥"

इति भर्तृहरिः। ध्वनिकारेण स एव ध्वनिशब्दः

(8) ध्वन्यालोकः I p. 136

स्वीकृतः। ध्वनतीति कृत्वा शब्दः अर्थः च उभयं ध्वनिः। तथैव व्यङ्ग्योऽपि ध्वनिः ध्वन्यत इति कृत्वा। शब्दव्यापारः अपि ध्वननमिति ध्वनिः। काव्यमिति व्यपदेश्यः अर्थोऽपि ध्वनिः। तत्र ध्वन्यालोके व्यवहरन्ति -

"प्रथमे हि विद्वांसो वैयाकरणाः।"(1)

व्याकरणमूलत्वात् सर्वविद्यानाम्। ते च श्रूयमाणेषु वर्णेषु ध्वनिरिति व्यवहरन्ति। तथैव अन्यैः तन्मतानुसारिभिः सूरिभिः काव्यतत्त्वार्थदर्शिभिः वाच्यवाचकसंमिश्रः शब्दात्मा काव्यमिति व्यपदेश्यो व्यञ्जकत्वसाम्याद् ध्वनिरित्युक्तः।

शब्दार्थौ सहितौ काव्यं इति प्राच्यां काव्यलक्षणम्। उभयोरप्याचार्ययोः (कुन्तकानन्दवर्धनयोः) एतन्मतं सम्मतमेव।

आनन्दवर्धनः "शब्दार्थशरीरं तावत् काव्यम्" इति काव्यसामान्यलक्षणतया एतदनूद्य काव्यात्मभूतं ध्वनिं काव्यविशेषलक्षणरूपेण एवं लक्षयति- "यत्रार्थशब्दो वा......" इति। अयमाशयः यत्र शब्दार्थौ उभावपि व्यङ्ग्यव्यञ्जने तत्परो भवतः तत्काव्यं उत्तमं काव्यमिति। कुन्तकस्तु सालङ्कारस्य काव्यता इति काव्यसामान्यलक्षण- मुक्त्वा 'शब्दार्थौ सहितौ' इति विशेषलक्षणं वदति। अस्मिन् लक्षणे च सर्वेषां पदानां केचनविशिष्टाः अर्थाः कल्पिताः कुन्तकेन। तच्च पूर्वमेव विवृतम्। कुन्तकस्यायमाशयः सम्यक्

(1) वाक्यपदीय I-447

सम्मिलितौ शब्दार्थौ एनकेनचित् वक्रताव्यापारेण शोभमानौ सहृदयहृदयाह्लादकारिणौ च यदि स्यातां तर्हि काव्यव्यपदेशभाजौ भवतः। आचार्यः आनन्दवर्धनः व्यङ्ग्यार्थस्य सर्वप्राधान्यं कल्पयति। कुन्तकस्तु सहृदयाह्लादस्य वक्रताव्यापारस्य शब्दार्थयोः साहित्यस्य च समं प्राधान्यं कल्पयतीव। काव्यलक्षणे एव कविसहृदययोः निवेशः कृतः कुन्तकेन। आनन्दवर्धनेन तु सर्वैरपि काव्यांशैः- कविः, सहृदयः, शब्दः, अर्थः, वर्णः, पदः इत्येतैः व्यङ्ग्यार्थपरैः भाव्यमित्यत्र श्रद्धा अतीव ख्याप्यते।

---

## तृतीयः अध्यायः।

### वक्रोक्तिः कुन्तकस्य।

भारतीयकाव्यशास्त्रचरित्रे अन्यथा चिन्तितसिद्धान्तः भवति वक्रोक्तिः। वक्रः उक्तिरिति तस्य अर्थः एव तस्य मूलहेतुः। कुन्तकस्य "वक्रोक्तिजीवितं" इति ग्रन्थस्य प्रकाशनेन एव वक्रोक्तेः यथार्थस्वरूपं परिज्ञातं सहृदयैः।

वक्रोक्तिः प्राचीनकाले। :-

कुन्तकात् पूर्ववर्तिनः आलङ्कारिकाः वक्रोक्तिं कश्चन अलङ्कारः इति धिया निरूपणं कृतवन्तः। किन्तु कुन्तकस्य मते अलङ्कारसामान्यं भवति वक्रोक्तिः। यकानां अलङ्कारः वक्रार्थे, वक्रशब्दे च वर्तते इति भामहः। तदुक्तं तेन- "वक्राभिधेयशब्दोक्तिरिष्टा वाचामलङ्कृतिः।" (1) अतिशयोक्तिरेव वक्रोक्तिरित्यनेन विवक्षितः भामहेन। अतिशयं इत्यस्य अलौकिक इति अर्थः अपि भामहेन तथा कुन्तकेनापि स्वीकृतः। तदुक्तं भामहेन -

"सैषा सर्वैव वक्रोक्तिरनयार्थो विभाव्यते।
यत्नोऽस्यां कविनाकार्यः कोऽलङ्कारोऽनया विना॥" (2)

इति।

(1) काव्यालङ्कारम् - I - 36

(2) काव्यालङ्कारम् - II - 85

दण्डिः स्वभावोक्तिः, वक्रोक्तिरिति वाङ्मयं द्विधा विभजति। तत्र स्वभावोक्तिः सूक्ष्मस्वभाववर्णना एव। एतत् शास्त्रे एव दृश्यते। चमत्कारसहितवर्णना एव वक्रोक्तिः। एतत् काव्ये दृश्यते। उपमादि अलङ्काराः एव वक्रोक्तिरिति शब्देन विवक्षिताः। तदुक्तं तेन--

"विवक्षा या विशेषस्य लोकसीमातिवर्तिनी।
असावतिशयोक्तिः स्यादलङ्कारोत्तमो यथा॥"(3)

इति।

वामनस्य मते वक्रोक्तिः शब्दालङ्कार एव। "सादृश्याल्लक्षणा वक्रोक्तिः।"(4) इति वक्रोक्तेः निर्वचनं तेन कृतम्। काव्ये अलङ्कारापेक्षया गुणस्य प्राधान्यं स्वीकृतं वामनेन।

रुद्रटस्य मते वक्रोक्तिः अलङ्कार एव। सः काकुवक्रोक्तिः श्लेषवक्रोक्तिरिति द्विधा वक्रोक्तिं विभजते।

वक्रोक्तिः अतिशयोक्तेः पर्यायः भवतीति आनन्दवर्धनेन उक्तम्। एतत् सर्वालङ्काराणां मूलमिति तेन अङ्गीकृतम्। ध्वन्यालोके ध्वन्यभाववादिनां प्रतिपादनावसरे "वक्रोक्तिशून्यं च यत्" (5) इति अभाववादिभिः उक्तं इति आनन्दवर्धनेन सूचितम्। "वक्रोक्तिरुत्कृष्टासं-

(3) काव्यादर्शः - 2 - 212

(4) काव्यालङ्कारसूत्रवृत्तिः।

(5) ध्वन्यालोकः - I - 29

घटना वक्रोक्तिशून्यशब्देन सर्वालङ्काराभावस्तु उक्तः।" (6) इति व्याख्यातं अभिनवगुप्तेन।

वक्रोक्तिः, रसोक्तिः, स्वभावोक्तिः इति वाङ्मयं त्रिधा विभजते भोजः। उपमाद्यलङ्काराणां प्राधान्यं यत्र वर्तते तत् वक्रोक्तिरिति तस्य मतम्। विभावानुभावादीनां संयोगात् रसः उद्दीप्तं भवति। अनया रीत्या एव रसोक्तिराविष्कृता तेन। माधुर्यादिगुणाः यत्र प्राधान्येन वर्तते तत् स्वभावोक्तिः। वक्रोक्तिं उक्तिवैचित्र्यं इत्यर्थेऽपि कवयः स्वीकुर्वन्ति।

"वक्रोक्तिनिपुणेन विलासिजनेन," "एषापि बुध्यते एव एतावती वक्रोक्तिः", "वक्रोक्तिनिपुणेन आख्यायिकाख्यानपरिचयचतुरेण" (7) इति च बाणेन प्रयुक्तम्। अत्र वक्रोक्तिः 'क्रीडालापं' इति चातुर्यगर्भितोक्तिः इति अर्थद्वयेन शब्दोऽयं प्रयुक्तो दृश्यते।

व्यङ्ग्यगर्भितोक्तिः इत्यर्थे वक्रोक्तिरिति पदं अमरुकेन प्रयुक्तम्। अग्निपुराणे वक्रोक्तेः शब्दालङ्कारस्य स्थानमेव दत्तम्। तदुक्तम्- "वक्रोक्तिस्तु भवेद् भङ्ग्या काकुस्तेन कृता द्विधा।" (8)

वक्रोक्तिः- कुन्तकस्य मते।

कुन्तकस्य मते काव्यस्य चमत्कारहेतुः भवति वक्रोक्तिः। गुणं, रसः, रीतिं,

(6) ध्वन्यालोकलोचनम्। - I - P. 29

(7) भारतीयकाव्यशास्त्रम्। 10- P. 292

(8) भारतीयकाव्यशास्त्रम्। 10- P. 292

अलङ्कारः, ध्वनिः इत्यादि काव्यघटकाः वक्रोक्तौ अन्तर्भवन्ति। तस्य मते वक्रोक्तिः अलङ्कारः। स्वभावोक्तिः अलङ्कार एव।

<u>वक्रोक्तिजीवितम्</u>।

कुन्तकाचार्येण रचितः ग्रन्थः भवति वक्रोक्तिजीवितम्। कुन्तकाचार्यस्य जीवनकालः एकादशशतके भवति। प्रौढे हृद्ये च ग्रन्थेऽस्मिन् वक्रोक्तिरेव काव्यस्य जीवातुभूतः अंशः इति स्थापयति कुन्तकाचार्यः। सहृदयमनः प्रीत्यर्थं वक्रकविव्यापारपूर्वेण हृद्यया रचनया व्यवस्थितानां शब्दार्थानां प्रतिपादनं वक्रोक्तिनाम अलङ्कारेण कृतम्। "वक्रोक्तिः वैदग्ध्यभङ्गीभणितिः।" (9) इति तस्याः निर्वचनम्।

वक्रोक्तिजीविते चत्वारः उन्मेषाः सन्ति। इयं ग्रन्थः कारिका - वृत्ति - उदाहरणं इत्येवं क्रमेणास्ति तस्य प्रतिपादनरीतिः।

<u>वक्रोक्तिः</u>।

शब्दार्थयोः प्रसिद्धस्वरूपातिरिक्तं अन्यदेव रूपान्तरं अभिधाय वक्रोक्तिं लक्षयति कुन्तकः :-

"उभावेतावलंकार्यौ तयोः पुनरलङ्कृतिः।
वक्रोक्तिरेव वैदग्ध्यभङ्गीभणितिरुच्यते॥" (10)

---

(9) वक्रोक्तिजीवितम्। - I-47
(10) वक्रोक्तिजीवितम्। I P. 47

इति।

प्रसिद्धप्रस्थानव्यतिरेकी अलङ्कृती वाच्य एव वक्रोक्तिः।" वक्रोक्तिः प्रसिद्धाभिधानव्यतिरेकिणी विचित्रैवाभिधा। कीदृशी- वैदग्ध्यभङ्गीभणितिः। वैदग्ध्यं विदग्धभावः कविकर्मकौशलं तस्य भङ्गी विच्छित्तिः, तया भणितिः विचित्रैवाभिधा वक्रोक्तिरित्युच्यते। तदिदमत्र तात्पर्यम्- यत् शब्दार्थौ पृथगवस्थितौ केनापि व्यतिरिक्तेन अलङ्करणेन योज्येते, किन्तु वक्रतावैचित्र्ययोगितयाऽभिधानमेवानयोरलङ्कारः, तस्यैव शोभातिशयकारित्वात्।"[11] इति।

इयं वक्रोक्तिः शास्त्रव्यवहारात् सामान्यव्यवहारात् च भिन्ना। वक्रकविव्यापारशालिनि तद्विदाह्लादकारिणि बन्धे व्यवस्थितौ सम्मिलितौ शब्दार्थौ काव्यं इति कुन्तकस्य काव्यलक्षणम्। तदुक्तं तेन-

"शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि।
बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि॥"[12]

इति।

तदनन्तरं विशेषलक्षणमपि तेन कृतम्। बहुष्वपि तद्वाचकेषु सत्स्वपि विवक्षितार्थैकवाचकः शब्दः एव काव्यशब्दत्वेन मन्यते। सहृदयाह्लादकारि स्वस्पन्दसुन्दरः च

(11) वक्रोक्तिजीवितम्। - I p.45

(12) वक्रोक्तिजीवितम् - I P.17

स्यात् अर्थः। तदुक्तम् -

"शब्दो विवक्षितार्थैकवाचकोऽन्येषु सत्स्वपि।
अर्थः सहृदयाह्लादकारिस्वस्पन्दसुन्दरः॥" (13)

इति।

शोभाशालितां प्रति परस्परस्पर्धां आवहन्ति शब्दार्थौ। अनन्तरं शब्दार्थयोः साहित्यं कीदृशमिति प्रतिपाद्यते -

"साहित्यमनयोः शोभाशालितां प्रति काप्यसौ।
अन्यूनातिरिक्तत्वमनोहारिण्यवस्थितिः॥" (14)

इति।

शोभाशालितां प्रति अनयोः अन्यूनमनतिरिक्तत्वमनोहारिणि असौ कापि अवस्थितिः साहित्यं इत्यन्वयः।

सहितयोः भावः साहित्यम्। अनयोः शब्दार्थयोः अन्यूनातिरिक्तत्वमनोहारिणि परस्परस्पर्धित्वरमणीया सहृदयहृदयाह्लादकारितायाः कारणं या काप्यलौकिकी अवस्थितिः विचित्रा विन्यासभङ्गी यस्यामवस्थितौ शब्दार्थयोः एकतरस्यापि न्यूनत्वं वा अतिरिक्तत्वं वा (निकर्षो वा उत्कर्षो वा) नास्ति इत्यर्थः।

(13) वक्रोक्तिजीवितम् - I - P. 34
(14) वक्रोक्तिजीवितम् - I P. 57

तादृश अन्यूनातिरिक्तत्वावस्थिति: निकृष्टयोरपि सम्भवतीति तन्निवारणार्थं आह 'शोभाशालितां' इति। शोभा- सौन्दर्यं, तया शालते- श्लाघते य: स: शोभाशाली, तस्य भाव: शोभा- शालिता, तां प्रति सौन्दर्यशालितां प्रति इत्यर्थ:। सैव सहृदयाह्लादकारिता। तस्यां स्पर्धित्वेन या अवस्थिति: परस्परसाम्यसुभगमवस्थानं सा साहित्यमुच्यते। तत्र वाचकस्य वाचकान्तरेण वाच्यस्य वाच्यान्तरेण च साहित्यं कुत: नोक्तं इति चेन्न। क्रमव्युत्क्रमे प्रयोजनाभावात् असमन्वयात् च। तस्मात् मतयो: शब्दार्थयो: यथास्वं सहृदयाह्लादकारी स्वसम्पत्सामग्रीसमुदाय: यस्यां परस्परस्पर्धया परिस्फुरति सा अलौकिकीविन्याससम्पत् साहित्यव्यपदेशभाक् भवति।

यथा -

"भण तरुणि रमणमन्दिरमानन्दस्यन्दिसुन्दरेन्दुमुखि
यदि सल्लीलोल्लापिनि गच्छसि तत् किं त्वदीयं मे।
अनणुरणन्मणिमेखलमविरतशिञ्जानमञ्जुमञ्जीरम्
परिसरणमरुणचरणे रणरणकमकारणं कुरुते॥ (15)

इत्यत्र कवि:, मधुराक्षराणां विन्यास: करोत्यपि तत्र प्रतिभादारिद्र्यात् अर्थस्य आह्लादकारिता न दृश्यते। अन्यत् च शब्दसौन्दर्यशून्यं वस्तुप्रतिपादनं न काव्यमिति व्यवहार: अर्हति।

(15) वक्रोक्तिजीवितम् - I - 9,10

यथा - 'प्रकाशस्वाभाव्यं विदधाति न भावास्तमसि यत्।'[16] इत्यादि श्लोके शुष्कतर्कवाक्यशय्यया कविना उपनिबद्धः अर्थः न सुन्दरैः शब्दैः समाविष्कृतं इति न्यूनतया न काव्यम्। कविः सर्वथा प्रतिभास्फुरितमर्थं वक्रवाक्यैः आविष्कृत्य सहृदयानां आह्लादं जनयति। सुन्दरस्य अर्थस्य सुन्दरशब्दैः आविष्करणं कर्तुं सः समर्थः भवितुं अर्हति। शब्दार्थौ सह सहितभावेन अवस्थितौ च भवितुमर्हति।

"समसर्वगुणौ सन्तौ सुहृदाविव सङ्गतौ।
परस्परस्य शोभायै शब्दार्थौ भवतो यथा॥"[17]

इति शब्दार्थसाहित्यं शब्दार्थयोः परस्परशोभायै भवतु इति कुन्तकः अभिप्रैति।

काव्यशरीरभूतौ शब्दार्थौ अलङ्कार्यौ भवतः, वक्रोक्तिस्तु सर्वत्र अलङ्कार एव। यथोक्तं कुन्तकेन -

"उभावेतावलङ्कार्यौ तयोः पुनरलङ्कृतिः।
वक्रोक्तिरेव वैदग्ध्यभङ्गीभणितिरुच्यते॥"[18]

इति।

---

(16) वक्रोक्तिजीवितम् - I - ii

(17) वक्रोक्तिजीवितम् - I-18

(18) Ibid I - P.47

# चतुर्थः अध्यायः।

## ध्वनिभेदाः।

ध्वन्यालोकस्य प्रथमोद्योते एव ध्वनिकारेण ध्वनेः भेदद्वयमुक्तम्। ततः द्वितीयोद्योते आनन्दवर्धनः तस्य विविच्य विचारं करोति।

काव्यस्य आत्मभूतः ध्वनिः प्रथमं तावत् द्विविधः अविवक्षितवाच्यः विवक्षितान्यपरवाच्यश्चेति। अविवक्षितवाच्यः लक्षणामूलः, विवक्षितान्यपरवाच्यः अभिधामूलश्च भवति। अविवक्षितः अप्रधानीकृतः स्वात्मा येन इत्यविवक्षितवाच्यो व्यञ्जकोऽर्थो। विवक्षितः किन्तु अन्यपरः स्वात्मा येनेति विवक्षितान्यपरवाच्यः। यदि वा कर्मधारयेणार्थपक्षे अविवक्षितश्च असौ वाच्यश्चेति, विवक्षितान्यपरश्च असौ वाच्यश्चेति। तत्रार्थः कदाचिदनुपपद्यमानत्वादिना निमित्तेन अविवक्षितो भवति। कदाचित् उपपद्यमान इति कृत्वा विवक्षित एव। अत्र अर्थः प्राधान्येन व्यञ्जकः पूर्वत्र शब्दः।

### अविवक्षितवाच्यध्वनिः।

तत्र अविवक्षितवाच्यध्वनिः यथा-

"सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम्॥"(1)

(1) ध्वन्यालोकः - I - P. 145

इति ।

अत्र सुवर्णानि पुष्पाणि पुष्प्यतीति सुवर्णपुष्पा:, इत्येतत् वाक्यं असम्भवत्स्वार्थमित्यतः अविवक्षितवाच्यम् । एवं अभिधया पदार्थं तात्पर्यशक्त्या अन्वयं चावगम्य बाधकवशेन तमुपहत्य सादृश्यसम्बन्धात् शूरकृतविद्यसेवकानां सुलभसमृद्धिसम्भारभाजनतां लक्षयति । तेन त्रयाणां प्राशस्त्यं प्रतीतं भवति । तच्च अशब्दवाच्यत्वेन गोप्यमानं भवति । अत्र शब्द: प्रधानतया व्यञ्जक:, अर्थस्तु तत्सहकारितया इति चत्वारो व्यापारा: ।

अयं अविवक्षितवाच्यध्वनि: द्विधा भवति अर्थान्तरसंक्रमितात्यन्ततिरस्कृत भेदेन । तदेवोच्यते आनन्दवर्धनेन -

"अर्थान्तरे सङ्क्रमितं अत्यन्तं वा तिरस्कृतम् ।
अविवक्षितवाच्यस्य ध्वने: वाच्यं द्विधा मतम् ॥" (2)

इति ।

वस्तुतया वाच्यार्थ: अर्थान्तरे स्वयं संक्रान्त: न भवति, किन्तु सङ्क्रामयति । सङ्क्रमितमिति णिचा तिरस्कृतशब्देन न व्यञ्जनाव्यापारे य: सहकारिवर्ग: तस्यायं प्रभाव इत्युक्तम् । तस्य वाच्यस्य अविवक्षितत्वात् अविवक्षित वाच्य ध्वनिरिति व्यपदेश: तद्वाच्यं द्विधा इत्यर्थ: । योऽर्थ: उपपद्यमानोऽपि तावदेव अनुपयोगात् , तस्य धर्मान्तरसम्बन्धेन अर्थान्तरे

(2) ध्वन्यालोक: II - P. 174

परिणमयति सः अर्थान्तरसङ्क्रमितवाच्यध्वनिः। यस्त्वनुपपद्यमानः एव उपायतामात्रेणार्थान्तरप्रतिपत्तिं कृत्वा पलायत इव सः अर्थान्तरतिरस्कृतवाच्यः। तत्र धर्मिणः तिरस्कारः न विवक्षितः, लक्ष्यार्थव्यङ्ग्यार्थयोः प्रतीतौ तस्यापि अनुप्रवेशात् अपि: धर्मस्य तिरस्कारः अभीष्टः। अर्थान्तरसंक्रमितवाच्यो यथा-

"स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः।
कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे
वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव॥" (3)

इति। अत्र रामे वक्तरि सति 'रामोऽस्मि' इति तस्योक्तिः अनुपयुक्तत्वात् मुख्यार्थबाधा युक्ता। रामशब्दस्य धर्मिरूपमुख्यार्थे विवक्षितराज्यनिधर्माणां समवाय सम्बन्धः। तेन निमित्तेन राम शब्दः राज्यनिर्वासनाद्यसंख्येयधर्मान्तरपरिणतं रामव्यक्तिरूपमर्थं लक्षयति, न केवलं रामम्। तद्धासंख्यत्वाद् युगपदभिधातुं- अशक्यमेव। क्रमेण अभिधया अर्प्यमाणमपि एकबोधविषयत्वाभावात्- न विचित्रचर्वणापदमिति न चारुत्वातिशयकृत्। तत् प्रतीयते चेत् निश्चयेन विचित्रचर्वणापदं प्राप्यत एव। यथोक्तं उक्त्यन्तरेणाशक्यं यत् इति। प्रयोजनजातस्य एतादृशस्य रामगततद्धर्मावगाहिनी

(3) ध्वन्यालोकः II P. 175

प्रतीतिः एव सर्वत्र उत्कर्षहेतुः मन्तव्यः।
यथा वा ध्वनिकारस्यैव विषम-
बाणलीलायां -

"तदा जायन्ते गुणाः यदा ते सहृदयैर्गृह्यन्ते।
रविकिरणानुगृहीतानि कमलानि कमलानि॥" (4)

इति। अत्र द्वितीयकमलशब्दः स्ववाच्यार्थबाधापूर्वकं लक्ष्मीभाजनत्वादि विशिष्टमेवार्थं बोधयति।

अत्यन्ततिरस्कृतवाच्यध्वनिः।
अत्यन्ततिरस्कृतवाच्यो यथा-

"रविसंक्रान्तसौभाग्यस्तुषारावृतमण्डलः।
निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते॥" (5)

इति।
हेमन्तवर्णने पञ्चवट्यां रामस्य
उक्तिरियम्। अत्र 'अन्धः' शब्दः स्वार्थं सर्वथा
परित्यजति। ततश्च नष्टदृष्टिगतं पदार्थस्फुटीकरणाशक्तत्वं निमित्तीकृत्य आदर्शं लक्षणया
बोधयति। एवं असाधारणविच्छायत्वानुपयोगित्वाद्यसङ्ख्यं धर्मजातं प्रयोजनं व्यनक्ति। स्वार्थस्य
सर्वथा त्यागादत्र अत्यन्ततिरस्कृतवाच्यध्वनिः॥

(4) ध्वन्यालोकः II- P. 178
(5) ध्वन्यालोकः। II- P. 180

यथा वा-

"गगनं च मत्तमेघं धारालुलितार्जुनानि च वनानि।
निरहङ्कारमृगाङ्का हरन्ति नीला अपि निशाः॥" (6)

इति।

अत्र मत्तशब्दस्य सर्वथा अनुपपन्नत्वात् मुख्यार्थबाधा। मधुना प्रमत्तस्य पुरुषस्य मेघेन सह सादृश्यात् मत्तशब्दः मेघं लक्षयति। ततः अनुचितकारित्वदुर्वारत्वादि धर्मसहस्रं ध्वन्यते।

प्रतिषेधस्य प्रसक्तिपूर्वकत्वान्निरहङ्कारशब्दो ह्यहङ्कारस्वरूपयोग्ये चेतनविशेष एव स्वरसतः प्रयुज्यत इत्यतोऽत्र मुख्यार्थस्य अन्वयानुपपत्तिरूप बाधा। एवं मालिन्यादिनां सादृश्यात् चन्द्रं लक्षयते। निरहङ्कारपारतन्त्र्यविच्छायत्वोज्जीगिषाकृपाजिगीषात्यागप्रभृतिः।

अचेतनवस्तुकल्पने निरहङ्कारपदेन चन्द्रस्यात्यन्तकान्तिक्षतिः व्यज्यते। तद्वत् मत्तशब्देन दुर्निवारत्वाकार्यकारित्वमूर्खत्वादयः व्यज्यन्ते।

विवक्षितान्यपरवाच्य ध्वनिः।

एवं अविवक्षितवाच्यध्वनिप्रभेदान् प्रतिपाद्य विवक्षितान्यपरवाच्यध्वनेः प्रभेदान् निरूपयति।

" असंलक्ष्यक्रमोद्योतः क्रमेण द्योतितः परः।

(6) ध्वन्यालोकः II P. 181

विवक्षितामिधेयस्य ध्वनेरात्मा द्विधा मतः ॥"[1]

इति।

मुख्यतया प्रकाशमानो व्यङ्ग्योऽर्थो ध्वनेरात्मा। स च वाच्यार्थापेक्षया कश्चित् अलक्ष्यक्रमतया प्रकाशते, कश्चित्क्रमेणेति द्विधा मतः। यत्र वाच्यार्थापेक्षया व्यङ्ग्यार्थः अलक्ष्यक्रमतया प्रकाशते सः असंलक्ष्यक्रमध्वनिः। यत्र वाच्यार्थापेक्षया व्यङ्ग्यार्थः क्रमेण प्रकाशते सः संलक्ष्यक्रमध्वनिः।

एवं असंलक्ष्यक्रम इति संलक्ष्यक्रम इति च विवक्षितान्यपरवाच्यध्वनिरपि द्विधा विभक्तः।

असंलक्ष्यक्रमध्वनिः एव अर्थशक्त्युद्भवानुस्वानोपमव्यङ्ग्यध्वनिरिति कीर्त्यन्ते। संलक्ष्यक्रमध्वनिस्तु पुनः रसध्वनिः, भावध्वनिः, वस्तुध्वनिः इति त्रिधा। अत्र रसशब्दः स्थायिभावत्वेन परिगणनीय इति रसगङ्गाधरकारः जगन्नाथपण्डितः।

असंलक्ष्यक्रमध्वनिप्रसङ्गे रसादयः अष्टधा विभक्ताः। एकैकस्यापि प्रत्येकमुदाहरणं ध्वन्यालोकविवृतिकृता लोचनकारेण अभिनवगुप्तेन प्रदर्शितम्। तत्र भावध्वनेः उदाहरणं यथा -

"तिष्ठेत्कोपवशात्प्रभावविहिता दीर्घं न सा कुप्यति

(1) ध्वन्यालोकः II - P. 183

स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मनः।
तां हर्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरावर्तिनी
सा चात्यन्तमगोचरं नयनयोर्यातेति कोऽयं विधिः॥" (8)

इति।

अत्र हि विप्रलम्भरससद्भावेऽपीयति वितर्काख्यव्यभिचारिचमत्क्रियाप्रयुक्त आस्वादातिशयः। अथ भावोदयध्वनेरुदाहरणं यथा -

"याते गोत्रविपर्यये श्रुतिपथं शय्यामनुप्राप्तया
निर्ध्यातं परिवर्तनं पुनरपि प्रारब्धमङ्गीकृतम्।
भूयस्तत्प्रकृतं कृतं च शिथिलक्षिप्तैकदोर्लेखया
तन्वङ्ग्या न तु पारितः स्तनभरः क्रष्टुं प्रियस्योरसः॥ (9)

इति।

अत्र प्रणयकोपः क्षणिकमात्रमेव। तन्वङ्ग्याः स्तनभरः प्रियस्योरसः क्रष्टुं न पारितः इत्यनेन उदयावस्थां प्राप्ता कस्याश्चिन्नायिकायाः प्रणयचेष्टा अत्र व्यज्यते। भावसन्धिर्यथा -

"ईर्ष्याकलुषोभिताया मुखं चुम्बितं येन।
अमृतरसनिर्झराणां तृप्तिर्ज्ञाता तेन॥" (10)

(8) लोचनम् - II P. 184
(9) Ibid - II P. 185
(10) Ibid - II P. 185

इति ।

अत्र कोपकषायगद्गदमन्दरुदिताया येन मुखं चुम्बितं तेनामृतरसनिगरणविश्रान्ति परम्पराणां तृप्तिर्ज्ञाता इत्यत्र कोपप्रसादसन्धिरेव चमत्कारस्थानम् ।

क्वचित् व्यभिचार्यन्तरशबलता एव दर्शितं यथा -

"क्वा कार्यं शशलक्ष्मणः क्व
च कुलं भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय मे श्रुतमहो
कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृत-
धियः स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपैहि कः खलु
युवा धन्योऽधरं धास्यति ॥"(1)

इति

अत्र वितर्कौत्सुक्ये, मतिस्मरणे, शङ्कादैन्ये, धृतिचिन्तने च परस्परं बाध्यबाधकभावेन द्वन्द्वशो भवन्ती, पर्यन्ते तु चिन्ताया एव प्राधान्यतया चात्र विभिन्नभावानां सम्मिलितत्वात् भावशबलता ।

रसध्वनिर्यथा -

"कृच्छ्रेणोरुयुगं व्यतीत्य सुचिरं भ्रान्त्वा

(1) लोचनम् II - P - 186

नितम्बस्थले
मध्येऽस्यास्त्रिवलीतरङ्ग -
विषमे निःष्यन्दतामागता।
मद्दृष्टिस्तृषितेव सम्प्रति
शनैरारुह्य तुङ्गौ स्तनौ
साकाङ्क्षं मुहुरीक्षते
जललवप्रस्यन्दिनी लोचने॥"[12]

इति।

अत्र हि नायिकाकारानुवर्ण्यमानस्वात्मप्रतिकृतिपरिचित्रितचित्रफलकावलोकनाद्वत्सराजस्य परस्परास्थाबन्धरूपो रतिस्थायिभावो विभावानुभावसंयोजनवशेन चर्वणारूढः। अतः अत्र रसादिरर्थोऽङ्गित्वेन भासमानोऽसंलक्ष्यक्रमव्यङ्ग्यस्य ध्वनेः प्रकारः।

रसस्य अङ्गित्वेनावभासमान इत्यनेन रसध्वनिरेवात्र वर्तते। रसस्य अङ्गिभावत्वेन (प्राधान्येन) व्यञ्जितो भावविशेषोऽस्ति तत्र रसध्वनिः। यत्र रसस्य अङ्गत्व (अप्राधान्य) प्रदर्शनं तत्र रसवदलङ्कार इति तयोः भेदमपि कृतः आनन्दवर्धनाचार्येण। अत एव उक्तं तेन-

"रसभावतदाभासतत्प्रशान्त्यादिरक्रमः।
ध्वनेरात्माङ्गिभावेन भासमानो व्यवस्थितम्॥"[13]

(12) लोचनम् II P. 188

(13) ध्वन्यालोकः II - P. 183

इति ।

एवं अप्रधानीभूतो रसस्यापि (रसवदलङ्कारस्य) चत्वारो भेदाः सन्ति यथा- रसवद्, प्रेयः, ऊर्जस्वी, समाहितभेदाद्। तत्र "रस्यतेति रसाः" इति व्युत्पत्त्या रसः चतुर्धा विभक्तः। रस-भाव- तदाभास- भावशान्त्यादि भेदात्। एषु चतुर्षु अमुख्यतया प्रतीतौ (अङ्गप्रतीतौ) रसवद-लङ्कारोऽपि चतुर्धा विभक्तम्। काव्ये रसस्य अङ्गत्वकल्पने रसवद्, भावस्याङ्गत्वकथने प्रेयो, रसाभास- भावाभासकथनयोरङ्गत्वे ऊर्जस्वी, भावशान्तेः अङ्गत्वकथने समाहित इतिवत्।

तत्र रसादिरलङ्कारः द्विधा -शुद्ध सङ्कीर्णश्चेति। अत्राद्यस्य उदाहरणं यथा -

"किं हास्येन न मे प्रयास्यसि
पुनः प्राप्तश्चिराद्दर्शनं
केयं निष्करुण प्रवास-
रुचिता केनासि दूरीकृतः।
स्वप्नान्तेष्विति ते वदन्
प्रियतमव्यासक्तकण्ठग्रहो
बुद्ध्वा रोदिति रिक्तबाहु-
वलयस्तारं रिपुस्त्रीजनः॥" (14)

अत्र करुणरसस्य शुद्धस्य अङ्गभा-वात् रसवदलङ्कारत्वं स्पष्टमेव। अपरस्योदाहरणं यथा -

(14) ध्वन्यालोकः II. P. 203

"क्षिप्तो हस्तावलग्नः प्रसभ-
मभिहतोऽप्याददानोंऽशुकान्तं
गृह्णन् केशेष्ववधूतस्त्रपरण-
निपतितो नेक्षितः सम्भ्रमेण।
आलिङ्गन्योऽवधूतस्त्रिपुर-
युवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु
दुरितं शाम्भवो वः शराग्निः॥" (15)

इति।

अत्र वाक्यार्थत्वेन त्रिपुरस्त्रिपुर-प्रभावातिशयस्य ईर्ष्याविप्रलम्भस्य केवलस्यैव-प्रतीतौ च रसस्यमुख्यत्वं दर्शितम्। ईर्ष्याविप्रलम्भशृङ्गारेण सह त्रिपुररिपुप्रभावातिशयस्य अङ्गभूतत्वात् करुणरससमावेशोऽपि दोषस्य अनुपपत्तिरपि अत्र न वर्तते। शुद्धो भावालङ्कारस्य यथा -

"तव शतपत्रपत्रमृदुताम्रतलश्चरणा-
श्चलत्कलहंसनूपुरकलध्वनिना मुखरः।
महिषासुरस्य शिरसि प्रसभं निहितः
कनकमहामहीध्रगुरुतां कथमम्ब गतः॥" (16)

इति।

अत्र देवीप्रभावसम्बन्धीरतेः

(15) ध्वन्यालोकः II P. 206
(16) लोचनम् II P. 210

वितर्कविस्मयादि भावाः अमुख्यतया चारुत्वप्रदानेन प्रेयोऽलङ्कार स्पष्ट एव। उपमालङ्कारः वितर्कादिभावस्य अङ्गत्वसन्निवेशितत्वाभावेऽपि तत्कार्यनिर्वहणं शक्यमित्यनेन असङ्कीर्णः शुद्धो भावालङ्कारः।

रसाभासस्य (ऊर्जस्व्याः) अलङ्कारत्वप्राप्तेः उदाहरणं यथा -

"समस्तगुणसम्पदः सममलङ्क्रियाणां गणै-
र्भवन्ति यदि भूषणं तव तथापि नो शोभसे।
शिवं हृदयवल्लभं यदि यथा तथा रञ्जये-
स्तदेव ननु वाणि! ते भवति सर्वलोकोत्तरम्॥"(17)

इति।

अत्र श्लेषसहितो शृङ्गाररसाभासः वाक्यार्थेच्चमत्कृतिं जनयति।

भावाभासकृतोर्जस्व्याः उदाहरणं यथा -

"सा पातु वो यस्य हतावशेषा-
स्तत्तुल्यवर्णाञ्जनरञ्जितेषु।
लावण्ययुक्तेष्वपि वित्रसन्ति
दैत्याः स्वकान्तानयनोत्पलेषु॥"(18)

अत्र स्वतः रौद्रप्रकृतीनां

(17) लोचनम् II. P. 210

(18) Ibid II. P. 211

दैत्यानां अनुचितः त्रासो भगवत्प्रभावेनैव कृतम्। एतत् अनौचित्यं विगणय्य तत्प्रभाववर्णनं विभावितरतेः अङ्गत्वेन कल्पनं कविकृतमेव। एवं पराङ्गभूतोऽयं भावाभासः ऊर्जस्व्याः उदाहरणीभूतः। एवं भावप्रशमादयोऽपि दृश्यन्ते।

एवं श्रीमद्राजानकानन्दवर्धनाचार्येण ध्वनिभेदप्रभेदाः निरूपिताः।

---

पञ्चमः अध्यायः।

वक्रोक्तिभेदाः।

कुन्तकाचार्यः वक्रोक्तिजीवितस्य प्रथमोन्मेषे वक्रोक्तिस्वरूपमुक्त्वा वक्रोक्तिभेदान् विवृणोति -

"कविव्यापारवक्रत्वप्रकाराः सम्भवन्ति षट्।
प्रत्येकं बहवो भेदास्तेषां विच्छित्तिशोभिनः॥"(1)

इति।

कवीनां व्यापारः कविव्यापारः कविक्रियालक्षणः, तस्य वक्रत्वं वक्रभावः, प्रसिद्ध-प्रस्थानव्यतिरेकि वैचित्र्यं, तस्य प्रकाराः प्रभेदाः षट् सम्भवन्ति। मुख्यतया तावन्त एव सम्भवन्तीत्यर्थः। तेषां षट्प्रकाराणां प्रत्येकं प्रकाराः, बहवो भेदविशेषाः सम्भवन्ति। ते भेदाः विच्छित्तिशोभिनः वैचित्र्यभङ्गीभ्राजिष्णवश्च भवन्ति।

वर्णविन्यासवक्रता, पदपूर्वार्धवक्रता, प्रत्ययाश्रितवक्रता, वाक्यवक्रता, प्रकरणवक्रता, प्रबन्धवक्रता चेति तेषां नामानि। तदेव विवृणोति -

"वर्णविन्यासवक्रत्वं पदपूर्वार्धवक्रता।

(1) वक्रोक्तिजीवितम् I P.62

वक्रतायाः परोऽप्यस्ति प्रकारः प्रत्ययाश्रयः॥" (2)
"वाक्यस्य वक्रभावोऽन्यो भिद्यते यः सहस्रधा।
यत्रालङ्कारवर्गोऽसौ सर्वोऽप्यन्तर्भविष्यति॥" (3)
"वक्रभावः प्रकरणे प्रबन्धे वास्ति यादृशः।
उच्यते सहजाहार्यसौकुमार्यमनोहरः॥" (4)

इति।

1) वर्णविन्यासवक्रता।

वर्णानां विन्यासः वर्णविन्यासः। अक्षराणां विशिष्टन्यसनं वर्णविन्यासः, तस्य वक्रत्वं वक्रभावः। वक्रभावो नाम प्रसिद्धप्रस्थान-व्यतिरेकिणा वैचित्र्येण उपनिबद्धः सन्निवेशविशेषविहितः तद्विदाह्लादकारी शब्दशोभातिशयः। यथा -

"प्रथममरुणच्छायस्तावत्ततः कनकप्रभ-
स्तदनु विरहोत्ताम्यत्तन्वीकपोलतलद्युतिः।
सरसबिसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः॥" (5)
प्रसरति ततो ध्वान्तक्षोदक्षमः क्षणदामुखे।'

इति।

अत्र वर्णविन्यासवक्रतामात्रविहितः शब्दशोभातिशयः सुतरां समुन्मीलितः। एतदेव वर्णविन्यासवक्रत्वं चिरन्तनेषु अनुप्रास इति

(2) वक्रोक्तिजीवितम् I. P. 63
(3) Ibid I- P. 86
(4) Ibid I. P. 89
(5) Ibid I P. 63

प्रसिद्धम् ।

2) पदपूर्वार्धवक्रता ।

सुप्तिङन्तं पदम् । सुबन्तस्य तिङन्तस्य वा पदस्य यत् पूर्वार्धं प्रातिपदिकलक्षणं धातुलक्षणं वा तस्य वक्रता, वक्रभावः, पदपूर्वार्धवक्रता । पदपूर्वार्धवक्रतायाः बहवः प्रकाराः सम्भवन्ति ।

क) यत्र रूढिशब्दस्यैव प्रस्तावसमुचितत्वेन वाच्यप्रसिद्धधर्मान्तराध्यारोपगर्भत्वेन निबन्धः स पदपूर्वार्धवक्रतायाः प्रथमः प्रकारः । यथा -

"स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः ।
कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे
वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव॥"(6)

इति ।

अत्र 'रामोऽस्मि सर्वं सहे' इत्यत्र 'राम' शब्दः दशरथपुत्रत्वरूप अर्थात् भिन्नः अत्यधिकदुःखसहनशीलतारूप धर्मः अर्थः वाच्यात् लभ्यते । अतः अत्र रूढिवैचित्र्यवक्रता भवतीति वक्तुं शक्यते ।

ख) संज्ञामात्रस्य वाच्यप्रसिद्धधर्मस्य लोकोत्तरातिशयाध्यारोपं गर्भीकृत्य उपनिबन्धः तस्य द्वितीयः भेदः । यथा

(6) वक्रोक्तिजीवितम् I P. 64

"रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं परा-
मस्मद्भाग्यविपर्ययाद्यदि परं देवो न जानाति तम्।
वन्दीवैष यशांसि गायति मरुद्यस्यैकबाणाहति-
श्रेणीभूतविशालतालविवरोद्गीर्णैः स्वरैः सप्तभिः॥" (7)

इति।

अत्र रामशब्दः लोकोत्तरशौर्यादिधर्मातिशयाध्यारोपपरत्वेनोपात्तो वक्रतां प्रथयति।

ग) पदपूर्वार्धवक्रतायाः तृतीयप्रकारं भवति पर्यायवक्रत्वम्। वस्तुनः अनेकशब्दाभिधेयत्वे सति किमपि पर्यायपदं प्रस्तुतानुगुणत्वेन प्रयुज्यते तत् पर्यायवक्रत्वम्। यथा -

"वामं कज्जलवद्विलोचनमुरो रोहद्विसारिस्तनं
मध्यं क्षाममकाण्ड एव विपुलाभोगा नितम्बस्थली।
सद्यः प्राकृतविस्मयैरिति गणैरालोक्यमानं मुहुः
पायाद्वः प्रथमं वपुः स्मररिपोर्मिश्रीभवत्कान्तया॥" (8)

इति।

अत्र 'स्मररिपोः' इति पर्यायः कामपि वक्रतामुन्मीलयति।

एतत् पर्यायवक्रत्वं वाच्यासंभाविधर्मान्तरगर्भीकारेणापि दृश्यते। यथा -

"अङ्गराज सेनापते राजवल्लभ

(7) वक्रोक्तिजीवितम् I P. 65
(8) Ibid I P. 66

रक्षेनं भीमात् दुःशासनाम् ।" (9)

इति ।

अत्र त्रयाणामपि पर्यायाणां असम्भाव्यमानतत्परित्राणपात्रत्वलक्षणं किञ्चित्करत्वं गर्भीकृत्योपहस्यते - रक्षेनमिति । अतः अत्र पर्यायवक्रता ।

घ) पदपूर्वार्धवक्रतायाः चतुर्थं प्रकारान्तरं भवति उपचारवक्रत्वम् । अमूर्तस्य वस्तुनः उपचारात् मूर्तद्रव्याभिधायिना शब्देन अभिधानं उपचारवक्रत्वम् । यथा - "हस्तापचेयं यशः ।" (10) इति ।

अपचयनं मूर्तपुष्पादिष्वेव सामान्येन सम्भवति । अत्र उपचारात् अमूर्तस्यापि यशसः हस्तापचेयं इत्यभिधानं वक्रत्वमावहति ।

ङ) पदपूर्वार्धवक्रतायाः पञ्चमप्रकारं भवति विशेषणवक्रत्वम् । यत्र विशेषणमाहात्म्यादेव तद्विदाह्लादकारित्वलक्षणं वक्रत्वमभिव्यज्यते तत्र विशेषणवक्रत्वम् । यथा -

"व्रीडायोगान्नतवदनया सन्निधाने गुरूणां
बद्धोत्कम्पस्तनकलशया मन्युमन्तर्नियम्य ।
तिष्ठेत्युक्तं किमिव न तया यत्समुत्सृज्य बाष्पं
मय्यासक्तश्चकितहरिणीहारिनेत्रात्रिभागः ॥" (11)

इति ।

(9) वक्रोक्तिजीवितम् I. P. 67

(10) Ibid I P. 68

(11) Ibid I P. 71

अत्र चकितहरिणीहारीति क्रियाविशेषेण चकितहरिणीहारिविलोचनसाम्येन नेत्रत्रिभागासङ्गस्य गुरुसन्निधानविहिताप्रगल्भत्वरमणीयस्य कामपि कमनीयतां आवहति। अतः अत्र विशेषणवक्रता।

च) संवृतिवक्रत्वं पदपूर्वार्धवक्रतायाः अपरः प्रकारः। प्रस्तावानुगुण्येन केनापि निष्कर्षेण उत्कर्षेण वा युक्तं व्यक्ततया साक्षात् अभिधातुं अशक्यं पदार्थस्वरूपं संवृतिसामर्थ्योपयोगिना शब्देन अभिधीयते तत्संवृतिवक्रत्वम्। यथा-

"चतुर्थस्य तवाननादपगतं नाभूत् क्वचिन्निर्वृतं
येनैषा सततं त्वदेकशयनं वक्षःस्थली कल्पिता।
येनोद्भासितया विना बत जगच्छून्यं क्षणाज्जायते
सोऽयं दम्भधृतव्रतः प्रियतमे कर्तुं किमप्युद्यतः॥"(12)

इति।

अत्र वत्सराजो वासवदत्ताविपत्तिविधुरहृदयः तत्प्राप्तिप्रलोभनवशेन पद्मावतीं परिणेतुमीहमानः तदेव अकरणीयमित्यवच्छन् संवरणसमर्थेन किमपीत्यनेन सर्वनामपदेन वस्तुनः तस्य महापातकस्येवाकीर्तनीयतां ख्यापयति।

छ) पदपूर्वार्धवक्रतायाः वृत्तिवैचित्र्यं नाम अपरं प्रकारान्तरं सम्भवति। यत्र समासादिवृत्तीनां कासञ्चिद् विचित्राणां एव कविभिः परिग्रहः क्रियते तत्र वैचित्र्यवक्रत्वं

(12) वक्रोक्तिजीवितम् 1 P. 72

भवति । यथा - 'मध्येऽङ्कुरं पल्लवाः ।'[13] इति ।
यथा वा -

"सुधाविसरनिष्यन्दसमुल्लासविधायिनि ।
हिमधामनि खण्डेऽपि न जनो नोन्मनायते ॥"[14]

इति ।

ज) पदपूर्वार्धवक्रतायाः अपरं प्रकारान्तरं भवति लिङ्गवैचित्र्यम् । यत्र भिन्नलिङ्गानामपि शब्दानां वैचित्र्याय समानाधिकरण्योपनिबन्धः स लिङ्गवैचित्र्यम् । यथा - "मैथिली तस्य दाराः ।"[15] इति ।

अनेकलिङ्गसम्भवेऽपि सौकुमार्यात् कविभिः स्त्रीलिङ्गमेव प्रयुज्यते, तदपि लिङ्गवैचित्र्यं नाम वक्रत्वम् । यथा - "इतां पश्य पुरस्तटीम् ।"[16] इति ।

झ) पदपूर्वार्धस्य धातोः क्रियावैचित्र्यवक्रत्वं नाम वक्रत्वप्रकारान्तरं विद्यते । यत्र क्रियावैचित्र्यप्रतिपादनपरत्वेन वैदग्ध्यभङ्गीभणितिरमणीयान् प्रयोगान् कवयः निबध्नन्ति तत्र क्रियावैचित्र्यवक्रत्वम् । तदपि बहुविधं दृश्यते ।
यथा -

---

(13) वक्रोक्तिजीवितम् - I - P. 74.
(14) Ibid - I. P. 75
(15) Ibid - I P. 76
(16) Ibid - I P. 76

"स्वेच्छाकेसरिणः स्वच्छस्वच्छायायासितेन्दवः।
त्रायन्तां वो मधुरिपोः प्रपन्नार्तिच्छिदो नखाः।"(17)

इति।

अत्र नखानां सकललोकप्रसिद्धच्छेदन-व्यापारव्यतिरेकि किमपि अपूर्वमेव प्रपन्नार्तिच्छेदन-लक्षणं क्रियावैचित्र्यं उपनिबद्धम्। अतः अत्र क्रियावैचित्र्यवक्रता।

एवं पदपूर्वार्धवक्रतायाः नवत्वं निरूप्य प्रत्ययवक्रतां निरूपयत्याचार्यः।

3. प्रत्ययाश्रयवक्रता।

प्रत्ययं सुप्तिङ् च यस्याश्रयः स्थानं स प्रत्ययाश्रयवक्रता। अस्याः प्रत्ययाश्रय-वक्रतायाः संख्यावैचित्र्यविहितः, कारकवैचित्र्यविहितः, पुरुषवैचित्र्यविहितश्चेति बहवः प्रकाराः सम्भवन्ति। तत्र -

क) संख्यावैचित्र्यविहितः।

यस्मिन् वचनवैचित्र्यं काव्यबन्ध-शोभार्थं निबध्यते स संख्यावैचित्र्यविहितः वक्रताप्रकारः। यथा- "मैथिली तस्य दाराः।"(18) इति।

अत्र द्विवचनबहुवचनयोः समानाधिकरण्यमतीव चमत्कारकारि।

ख) कारकवैचित्र्यविहितः।

यत्र अचेतनस्यापि पदार्थस्य

(17) वक्रोक्तिजीवितम् - II - P. 78
(18) Ibid - II. P. 81

चेतनत्वाध्यारोपेण चेतनस्यैव क्रियासमावेश लक्षणं रसादिपरिपोषणार्थं कर्तृत्वादिकारकं निबध्यते सः कारकवैचित्र्यविहितः वक्रताप्रकारः। यथा -

"स्तनद्वन्द्वं मन्दं स्नपयति बलाद्बाष्प निवहो
हठादन्तः कण्ठं लुठति सरसः पञ्चमरवः।
शरज्ज्योत्स्नापाण्डुः पतति च कपोलः करतले
न जानीमस्तस्याः क इव हि विकारव्यतिकरः॥" (19)

इति।

अत्र बाष्पनिवहादीनामचेतनानामपि चेतनत्वाध्यारोपेण कविना कर्तृत्वमुपनिबद्धम्-यत्तस्याः विवशायाः सत्यास्तेषामेवंविधो व्यवहारः, सा पुनः स्वयं न किञ्चिदप्याचरितुं समर्थः इत्यभिप्रायः। अतः अत्र कारकवैचित्र्यविहितः वक्रताप्रकारः।

ग) पुरुषवैचित्र्यविहितावक्रता।

यत्र परित्यक्तापरभावविपर्यासंप्र-युञ्जते कवयः काव्यवैचित्र्यार्थं युष्मदि अस्मदि वा प्रयोक्तव्ये प्रातिपादिकमात्रं निबध्नन्ति सः पुरुषवैचित्र्यविहितः वक्रताप्रकारः। यथा -

"अस्मद्भाग्यविपर्ययाद्यदि परं देवो न जानाति तम्॥" (20)

इति।

(19) वक्रोक्तिजीवितम् 1- P. 82
(20) Ibid 1- P. 84

अत्र 'त्वं न जानासीति वक्तव्ये वैचित्र्यात् देवो न जानातीत्युक्तम्। अतः अत्र पुरुषवैचित्र्यविहिता वक्रता।

4) वाक्यवक्रता।

वाक्यावयवानां पदानां वर्णाद्यवयवद्वारेण वक्रभावं आचार्येण वर्णितम्। अनन्तरं वाक्यवक्रतां वर्णयति।

"वाक्यस्य वक्रभावोऽन्यो भिद्यते यः सहस्रधा।
यत्रालङ्कारवर्गोऽसौ सर्वोऽप्यन्तर्भविष्यति॥" (21)

इति।

वाक्यस्य पदसमुदायभूतस्य वक्रभावः अन्यः। अन्यः इत्यनेन पूर्वोक्तवक्रताव्यतिरेकी समुदायवैचित्र्यनिबन्धनः कोऽपि सम्भवतीत्युक्तम्। यथा -

"उपस्थिता पूर्वमपास्य लक्ष्मीं
वनं मया सार्धमसि प्रपन्नः।
त्वामाश्रयं प्राप्य तया नु कोपात्सो-
ढास्मि न त्वद्भवने वसन्ती॥" (22)

इति।

एतत् सीतया तथाविधकरुणाक्रान्तः करुणया वल्लभं प्रति सन्दिश्यते -

(21) वक्रोक्तिजीवितम् - I P.86

(22) Ibid - I. P.86

यदुपस्थितां सेवासमापन्नां लक्ष्मीमवाप्य पूर्वं यस्त्वं मया सार्धं वनं प्रपन्नः तस्य तव स्वच्छेऽप्येतन्न सम्भाव्यते। तथा पुनतस्मादेव कोपात् स्त्रीस्वभावसमुचितसपत्नीविद्वेषात्त्वद्गृहे वसन्ती न सोढास्मि इत्यर्थः।

स च वक्रभावः सहस्रधा भिद्यते। सहस्रशब्देन वक्रतायाः आनन्त्यमुक्तम्। अस्यां वक्रतायां उपमादिरलङ्कारवर्गः अन्तर्भविष्यति।

5,6) प्रकरणवक्रता प्रबन्धवक्रता च।

वाक्यवक्रतां व्याख्याय वाक्यसमूहरूपस्य प्रकरणस्य तत्समुदायात्मकस्य च प्रबन्धस्य च वक्रता व्याख्यायते-

"वक्रभावः प्रकरणे प्रबन्धे वास्ति यादृशः।
उच्यते सहजाहार्यसौकुमार्यमनोहरः॥" (23)

वक्रभावः विन्यासवैचित्र्यं प्रबन्धैकदेशभूते प्रकरणे विद्यते। नाटकादिप्रबन्धे च सः अस्ति। स वक्रभावः सहजाहार्यसौकुर्य मनोहरो भवति।

5) प्रकरणवक्रता।

प्रकरणे वक्रभावो यथा- रामायणे मायामृगं मारीचमनुगच्छतः रामस्य करुणाक्रन्दनं श्रुत्वा दुःखितया सीतया तत्प्राणपरित्राणाय लक्ष्मणः निर्भर्त्स्य प्रेषितः।

(23) वक्रोक्तिजीवितम् - I - P. 89

सर्वातिशय-चरितयुक्तत्वेन वर्ण्यमानस्य प्रधानस्य रामस्य अनुचरसन्निधाने तथाविध-व्याकरणमसम्भावनीयम्। तस्मात् एतदत्यन्तं अनौचित्यम्। एवं पर्यालोच्य उदात्तराघवे कविना वैदग्ध्यवशेन मारीचमृगमारणाय प्रयातस्य लक्ष्मणस्य परित्राणार्थं सीतया कातरत्वेन रामः प्रेरितः इत्युपनिबद्धम्। अत्र तद्विदाह्लादकारित्वमेव वक्रत्वम्।

6) <u>प्रबन्धवक्रता</u>।

प्रबन्धे वक्रभावो यथा- महाकवि विरचिते रामकथोपनिबन्धे नाटकादौ पञ्चविध-वक्रतासामग्रीसमुदायसुन्दरं सहृदयहृदयहारि महा-पुरुषवर्णनमुपक्रमे प्रतिभासते परमार्थतस्तु विधि-निषेधात्मकधर्मोपदेशः पर्यवस्यति, रामवद्वर्तितव्यं न रावणवदिति।

एवं कविव्यापारवक्रताषट्कं कुन्तकाचार्येण व्याख्यातम्।

षष्ठमः अध्यायः।

ध्वनिवक्रोक्तिपद्धत्योः तारतम्यसमीक्षा।

कुन्तकाचार्येण परम्पराप्राप्तां वक्रोक्तिं विस्तार्य सर्वं काव्यचारुत्वं तच्छरीरेऽन्तर्भावितम्। वाच्यवाचकधर्ममूलानामलङ्काराणां शोभा, तरुणीलावण्यसदृशस्य प्रतीयमानार्थस्य चारुत्वं वा सर्वमेतद् वक्रोक्तेः षड्भ्यः प्रकारेभ्यो नातिरिच्यते। सर्वं काव्यसौन्दर्यं वक्रोक्तिमुखप्रेक्षम्। वक्रोक्त्या एव चारुत्वं व्यवस्थापयन् कुन्तकः काव्ये ध्वनिप्राधान्यं प्रत्यवतिष्ठते। वक्रोक्तिमूलके काव्यचारुत्वे सिद्धे ध्वन्यादिरूपः पक्षान्तरः प्रतिष्ठां न लभते। एवं कण्ठतो ध्वनिमदूषयताऽपि कुन्तकेन वक्रोक्तेः सर्वातिशायित्वं रूपं व्यवस्थाप्य काव्ये ध्वनेरात्मत्वं तावद् विप्रतिपन्नमेव।

कुन्तकोऽभिधावादी। यतो ह्यभिधातिरिक्तो नान्यः शब्दव्यापारस्तेनानुमन्यते। तथा हि वक्रोक्तिस्वरूपमुद्घाटयता तेन प्रोक्तम्–

"काऽसौ? वक्रोक्तिरेव। वक्रोक्तिः प्रसिद्धाभिधानव्यतिरेकिणी विचित्रैवाभिधा। कीदृशी वैदग्ध्यभङ्गीभणितिः। वैदग्ध्यं विदग्धभावः, कविकर्मकौशलं तस्य भङ्गी विच्छित्तिस्तया भणितिः। विचित्रैवाभिधा वक्रोक्तिरुच्यते।" (1)

अनेनेदं प्रतिपद्यते यत्कुन्तकस्याभिधा न सामान्याऽभिधेयार्थबोधोपरता शास्त्रप्रसिद्धाऽभिधा।

(1) एस्. के. डे, कुन्तकः, वक्रोक्तिजीवितम्, P. 22

पर विचित्रैवाभिधा। वैचित्र्यञ्चास्या लोकातिक्रान्तरूपेणावस्थानम्। लोके व्यवहृता: साधारणा घटपटादयश्शब्दा: काञ्चिच्चमत्कृतिं नातन्वन्ति, अस्यैववैचित्र्याभावात्। शब्दार्थयोश्चमत्कारश्च तयोर्लोकोत्तररूपेणावस्थानादेव। अतोऽभिधा यदा कविकर्मकौशलमहिम्ना वक्रत्वमाप्नोति, तदा विचित्राऽसावभिधा, काव्ये परमशोभाधायिनी भवति। एवं कुन्तकोक्ताऽभिधा, न सामान्याभिधा, प्रत्युत कविकौशलोपस्कृता विचित्रैवाभिधा काचित्। कुन्तकेनास्यां विचित्रायामभिधायामेव लक्षणाव्यञ्जनेऽन्तर्भाविते। यथोक्तं तेन -

"ननु च द्योतकव्यञ्जकावपि शब्दौ सम्भवत:, तदसंग्रहान्नाव्याप्ति:, यस्मादर्थप्रतीतिकारित्वसामान्यादुपचारात्तावपि वाचकावेव। एवं द्योत्यव्यङ्ग्ययोरर्थयोरपि प्रत्येयत्वसामान्यादुपचाराद् वाच्यत्वमेव॥"(2)

अयमाशय:। यथा वाचक: शब्दोऽर्थप्रतीतिकारितायै व्यवह्रियते, तथैव व्यञ्जकद्योतकपदानामप्युपयोग:। यथा च प्रत्येयत्वं वाच्यार्थस्य धर्म:, तथैव व्यङ्ग्यार्थेऽपि प्रत्येयत्वसामान्याद् वाच्यो व्यपदिश्यते। इत्थं प्रत्येयत्वार्थप्रतीतिकारित्वधर्मौ वाच्यवाचकव्यङ्ग्यव्यञ्जकशब्दार्थयो: समानभावेन प्रसक्तौ। अत एवोपचाराद् व्यङ्ग्यव्यञ्जकयो: शब्दार्थयोर्वाच्यवाचकरूपेण नामकरणमुपपद्यते। एवं कुन्तकदर्शने व्यङ्ग्यव्यञ्जकयो: शब्दार्थयोर्वाच्यवाचकसब्रह्मचारित्वमेव, तयोर्विशेषादर्शनात्। इदमत्र बोध्यम्। कुन्तकेन वाच्यवाचकौ शब्दार्थौ न तथा गृहीतौ यथा वेदवादिना मीमांसकेन। परं तन्मते तयो-

(2) एस्. के. डे. कुन्तक:, वक्रोक्तिजीवितम् P.15

व्यापकं स्वरूपम्। तथा सति यथा व्यङ्ग्यव्यञ्जकयो-र्वाच्यवाचकाभ्यां न कश्चिद्विशेषस्तद्वद् व्यञ्जनाऽपि न विचित्राभिधाव्यतिरिक्ता। यथोपचाराद् द्योत्यद्योतकयोः शब्दार्थयोर्वाच्यवाचकेत्यभिधानमुपपन्नम्। तथैवोपचार-वशात् व्यञ्जनाप्यभिधैव। द्वयोरर्थप्रत्यायनकारितायाः समानभावेन व्याप्तत्वात्। अनेनेदं प्रतीयते यत्कुन्तक मते नाभिधातिरिक्तोऽन्यो व्यञ्जनादिकः कश्चिच्छब्द-व्यापारः।

वस्तुतस्त्वभिधावैचित्र्यवादिना कुन्तकेनाऽप्यभिधाया वैलक्षण्यं प्रतिपादयता ध्वननद्योतना-वगमनादिव्यपदेशनिरूपितो व्यञ्जनाव्यापारो नोपेक्षितुं शक्यः। अभिधाया यद् वैचित्र्यं तदसाधारणशब्दार्थविनि-बन्धनमूलकमेव। ध्वनिवादिभिरपि वाच्यवाचकभावं न्यक्कृत्य व्यङ्ग्यव्यञ्जकभावाभ्युपगमेन शब्दार्थयोरसा-धारणत्वं प्रत्ययादि। ध्वनिकाले शब्देनाभिधेयोऽर्थो न्यक्कृत्य, अर्थेन च स्वार्थं उपसर्जनीकृत्य व्यङ्ग्या-र्थः प्रत्याय्यते।(3) अतो ध्वनावपि साधारणैर्लोकप्रसिद्धैः शब्दार्थैर्न निर्वाहः, परं शब्दार्थयोर्वेदशास्त्रप्रसिद्धशब्दा-र्थवैलक्षण्यात्तयोर्व्यङ्ग्यव्यञ्जकभावे सर्वोत्तमं काव्यत्वम्। कुन्तकेनापि साधारणशब्दार्थविविक्तयोर्विवक्षितार्थैक-वाचक-सहृदयाह्लादकारि-स्वस्पन्दसुन्दरशब्दार्थयोरेव काव्यत्वं प्रोक्तम्। उभयोर्दर्शने साधारणशब्दार्थाभ्यां काव्यस्य न काचिद् भूषा। परं प्रसिद्धशब्दार्था-तिरेकिणोः शब्दार्थयोरेव विवक्षितार्थबोधसामर्थ्यात् स्वस्पन्दसौन्दर्याच्च काव्यस्य श्रियमातनुतः।(4)

(3) ध्वन्यालोक: I-13

(4) एस्. के. डे. वक्रोक्तिजीवितम् P. 16

इत्थं स्थिते विशेषार्थाभिधायित्वेनैव शब्दस्य यत् वैचित्र्यं कुन्तकेन प्रोक्तं तत्सर्वथा ध्वनिकारप्रोक्तव्यञ्जकशब्दस्वरूपानुकूलमेव । यतो हि ध्वनिसिद्धान्तेऽपि विवक्षितस्य प्रतीयमानार्थस्य तत्पायकत्वेनैव सहृदयहृदयानुरञ्जिका शब्दस्य व्यञ्जकतोदेति । कुन्तकदर्शनेऽपि सामान्यवाच्यार्थानभिधायिनो वक्रत्वशाणोल्लीढा विवक्षितार्थबोधसमर्था वाचकाः शब्दाः काव्य उपादेया भवन्ति, नेतरे । एवमुभयोः सिद्धान्ते साधारणस्य वाच्यवाचकधर्मस्य सर्वथा परित्यागः। तदेवानर्घं तत्त्वं कुन्तकेन वक्रोक्तिनाम्ना व्याकृतम्, ध्वनिकारेण च ध्वनिनाम्ना । सर्वथा प्रसिद्धशब्दार्थातिरिक्तौ विचित्रौ शब्दार्थौ द्वयोरिष्टौ । कुन्तकदर्शने वक्रत्वेन शब्दार्थयोः शोभा, ध्वनिकारदर्शने तु व्यञ्जकत्वेन । परं प्रसिद्धशब्दार्थपरित्यागः समानभावेन प्रसक्तो द्वयोः सिद्धान्तयोः। एतदेवोदाहरणेन स्पष्टीक्रियते ।

"द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया पिनाकिनः।
कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी ॥" (5)

अस्मिन् पद्ये पिनाकीपदं परिवर्त्य तत्स्थाने कपालीति पर्यायवाचिपदप्रयोगः साधुः, यतो हि कपालिनः इति पदस्य चारुत्वं भगवतो महादेवस्यानभिभवनीयस्वरूपात्मकार्थाभिव्यञ्जनादेव । महादेवार्थवाचकशब्दसहस्रसम्भवेऽपि 'कपालिनः' इति पदं व्यञ्जकत्वादेव काव्यस्य शोभातिशयं

(5) कुमारसम्भवम् 5-71

पुष्णाति। पिनाकादीनां पदानां प्रयोगे भगवत्याः पार्वत्या भगवति भवे जुगुप्सोदयस्य कविविवक्षितोऽर्थो नोदेति। अतोऽभीप्सितस्य सकलामङ्गलनिधानत्वदुराचारत्वस्पर्शसम्भाषणाद्यनर्हत्वाद्यर्थस्य प्रत्यायनसामर्थ्यं कपालिपदस्यैव। सर्वथानभिभवनीयाकृतिवशान्महादेवो वरत्वेन नाभिलषणीय इत्यमुमर्थं यथा कपालीतिपदं स्फोरयति न तथा पिनाकादीनि पर्यायवाचीनि पदानि। अत एवासाधारणार्थध्वननात् कपालिपदस्य व्यञ्जकत्वं ध्वनिवादिभिः प्रशस्यते। अयमेव भावः कुन्तकेन वाचकवक्रताभङ्ग्या प्रकटितः।[6]

एवं शास्त्रादिप्रसिद्धशब्दव्यतिरेकित्वं विवक्षितार्थवाचकत्वञ्च नाम यच्छब्दस्य स्वरूपं कुन्तकेन प्रोक्तं तद्व्यञ्जकाच्छब्दान्न भिन्नम्। तथा सत्यसाधारणशब्दार्थच्छद्मना उपसर्जनीकृतस्वार्थशब्दार्थात्मकं ध्वनिलक्षणमेव प्रोज्जीवितं कुन्तकेन। विचित्ताऽभिधानाम्ना च प्रकारान्तरेण व्यञ्जनैवाभ्युपगता।[7] व्यञ्जकं शब्दं व्यङ्ग्यमर्थं व्यञ्जनाव्यापारञ्च वक्रोक्तिच्छद्मना स्वीकुर्वन् कुन्तकः सर्वं ध्वनिं वक्रोक्तावन्तर्भावयतीति स्पष्टमेव तस्य भामहादिवदन्तर्भावपक्षानुगामित्वम्।

ध्वनिकारेण यास्तिस्रो ध्वनिविप्रतिपत्तयो ध्वन्यालोके निर्दिष्टास्तासु ये ध्वनिं लक्षणायामन्तर्भावयन्ति ते भाक्ता[8] उच्यन्ते। परं पूर्वोक्तेन विवेचनेनैतत् स्फुटं भवति यत् कुन्तकस्य वक्रोक्तिर्न लक्षणानिबन्धनी परमसौ व्यापिका।

(6) एस्. के. डे. वक्रोक्तिजीवितम् P.17
(7) The theories of Rasa and Dhvani. P.123.
(8) ध्वन्यालोकः - I-1

विद्याधरादिभिराचार्यैर्लक्षणानुप्राणितायामुपचारवक्रतायां कस्यचिद् ध्वनिभेदस्यान्तर्भावं निरीक्ष्योपलक्षणरूपेण कुन्तकः भक्तौ ध्वन्यन्तर्भाववादी प्रोक्तः। वस्तुतस्तु भक्तेः वक्रोक्तेरंशमात्रस्पर्शात् विद्याधरादीनामाचार्याणां वचनं विभ्रमकरमेव।

वस्तुतस्तु काव्यकाञ्चनकषाश्ममानी कुन्तकः काव्ये ध्वनेर्महिमानं नापलपितुं समर्थः। प्रतीयमानार्थसद्भावस्तेन स्वयं प्रतिपन्नः।
यथा हि –

"वक्त्रेन्दोर्न हरन्ति बाष्पपयसां धारा मनोज्ञां श्रियं
निःश्वासा न कदर्थयन्ति मधुरां बिम्बाधरस्य द्युतिम्।
तस्यास्त्वद्विरहे विपक्वलवलीलावण्यसंवादिनी
छाया कापि कपोलयोरनुदिनं तन्व्याः परं पुष्यति॥"(9)

अस्मिन् पद्ये विपक्वलवलीमनोहरकपोलवर्णनेन नायकविरहेण निरन्तरं कृश्यमानाया नायिकाया विरहावस्था ध्वन्यते। तेन च नायकस्य स्वकान्तासङ्गमरणरणकत्वरा प्रतीयमाना परां शोभामातनोति। एवं विचित्रमार्गं व्याख्यायता कुन्तकेन प्रतीयमानार्थस्य सौभाग्यं स्वहस्तितम्। वाच्यवाचकभिन्नवृत्तिवेद्यत्वञ्च तस्य सम्प्रतिपन्नम्।(10)

वस्त्वलङ्काररसरूपस्त्रिविधो ध्वनिः कुन्तकाभिमत एव। वस्तुवक्रताव्याख्यानप्रसङ्गे तेन व्यङ्ग्यत्वेनापि वस्तुरूपिणोऽर्थस्य ध्वननमङ्गीकृतम्।(11) तद्यथा-

(9) एस्. के. डे वक्रोक्तिजीवितम् P. 64
(10) कुन्तकः वक्रोक्तिजीवितम् I 50
(11) एस्. के. डे वक्रोक्तिजीवितम् P. 134

" तां प्राङ्मुखीं तत्र निवेश्य तन्वी
क्षणं व्यलम्बन्त पुरो निषण्णाः।
भूतार्थशोभाह्रियमाणनेत्राः
प्रसाधने सन्निहितेऽपि नार्यः॥" (12)

अत्र पार्वत्याः सौन्दर्यातिशयरूपिणो वस्त्वात्मनोऽर्थस्य प्रतीतिर्व्यङ्ग्यत्वेनेति वस्तुध्वनिसद्भावाभ्युपगमस्तावत् सिद्ध एव। किञ्च वाक्यवक्रतायां भूयांसि वस्तुध्वनेरुदाहरणानि दर्शनीयानि भवन्ति।

निदर्शनापरिवृत्त्यादिष्वलङ्कारेषूपमायाः प्रतीयमानतायामलङ्कारध्वनिरपि कुन्तकाभिमत एव। किञ्च -

" लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मि-
न्स्मेरेऽधुना तव मुखे तरलायताक्षि।
क्षोभं यदेति न मनागपि तेन मन्ये
सुव्यक्तमेव जलराशिरयं पयोधिः॥" (13)

इत्यत्र कुन्तकेन ध्वनिकारमनुकृत्य (14) रूपकालङ्कारस्य प्रतीयमानता कण्ठतः सम्प्रतिपन्ना। एतेन स्फुटं यदलङ्कारध्वनिरपि कुन्तकेन स्वीकृतः।

ध्वनिकारेण रसस्यालङ्कारतामपलप्य तस्य स्वशब्दवाच्यत्वं यथा स्थिरीकृतम्, तथा कुन्तकेनापि। (15) तद्यथा-

(12) एस्. के. डे वक्रोक्तिजीवितम् P. 135
(13) पट्टाभिराम : ध्वन्यालोक : P.261
(14) एस्. के. डे वक्रोक्तिजीवितम् P. 187
(15) Ibid P. 159

"अलङ्कारो न रसवत् परस्याप्रतिभासनात्।
स्वरूपादतिरिक्तस्य शब्दार्थसङ्गतेरपि॥" (16)

इत्यादिनाङ्गीभूतस्य रसस्यालङ्कारता कुन्तकेन विप्रतिपन्ना। परं तेन रसः प्रधानत्वेन न स्वीकृतः, परमसौ वक्रोक्तावेवान्तर्भावितः। तथापि ध्वनिकारवत् काव्ये रसस्य चमत्कारः कुन्तकानुमत एव। (17)

शब्दशक्तिमूलादयोऽन्यो ध्वनेर्भेदा अपि तेन क्वचित् पर्यायवक्रताभङ्ग्या क्वचिच्चोपचारवक्रताछद्मनोररीकृताः। तद्यथा ध्वनिकारप्रोक्तो यः शब्दशक्तिमूलध्वनिरसौ कुन्तकस्य पर्यायवक्रतानुसंवादी। यथा ध्वनिकारेणोपमारूपकादीनामलङ्काराणां ध्वननं शब्दशक्तिमूलध्वनौ प्रोक्तम्, तथैव कुन्तकेनाप्युपमादीनामलङ्काराणां प्रतीयमानता पर्यायवक्रतायां प्रोक्ता। (18) रूढिवैचित्र्यवक्रताव्याख्याने कुन्तकेन स्पष्टमेव शब्दानां वाचकत्वव्यापारस्यासामर्थ्यं प्रोक्तम्, ध्वनिकारोक्तो व्यङ्ग्यव्यञ्जकभावश्च स्वीकृतः। (19) वक्रताव्याख्यानवसरे कुन्तकेन ध्वनेरेवोदाहरणान्यक्षरशः उद्धृतानि।

किञ्च -

"सुप्तिङ्वचनसम्बन्धैस्तथा कारकशक्तिभिः।
कृत्तद्धितसमासैश्च द्योत्योऽलक्ष्यक्रमः क्वचित्॥" (20)

(16) वक्रोक्तिजीवितम् III - 11
(17) Ibid IV - 11
(18) एस. के. डे वक्रोक्तिजीवितम् P. 95
(19) वक्रोक्तिजीवितम् II - 9
(20) ध्वन्यालोकः III - 16

इत्यादिना ऽऽनन्दवर्धनाचार्येण सूचितादीनां यद् ध्वननं निर्दिष्टम् , तदेव कुन्तकेन वचनकारकलिङ्गादिवक्रताछद्मना व्याख्यातम् । (21)

एवं वक्रोक्तिजीवितग्रन्थस्यानुशीलने कृते सति स्पष्टं भवति यत् कुन्तकस्य वक्रोक्तिमूलकं नवीनं काव्यदर्शनं न ध्वनिविरोधि । प्रत्युत ध्वनेर्ये भेदाः ध्वनिकारेण प्रदर्शिताः, त एव कुन्तकेन वक्रतानाम्नोपात्ताः । यच्चास्या वक्रोक्तेश्चमत्कारित्वं, तच्च व्यङ्ग्यार्थानुग्रहेणैव, यदपि च मुख्यार्थबाधादुपचारदर्शनं तत्रापि प्रयोजनसद्भावात्, प्रयोजनस्य च व्यङ्ग्यत्वाद् व्यङ्ग्यार्थोपजीवकत्वं स्पष्टम् । तत्प्रोक्तं कविप्रतिभासमुत्थं शब्दार्थयोर्वैचित्र्यमपि साधारणलोकशास्त्रप्रसिद्धशब्दार्थातिरेकाद् ध्वनिकारोक्तोपसर्जनीकृतशब्दार्थानुबन्ध्येव । विचित्राऽभिधाऽपि व्यञ्जनासहोदर्यैव । अतो वक्रोक्तिं काव्यात्मत्वेन व्यवस्थापयदपि कुन्तकदर्शनं न ध्वनिविसंवादि । एवं तिलशस्तिलशो निष्पीड्यमानमिदं वक्रोक्तिदर्शनं ध्वनिपृष्ठसंलग्नं तत्पुच्छमिवाभाति । अत एव सूक्ष्मज्ञेन महिमभट्टेन ध्वनिवक्रोक्त्योरभेद एव प्रादर्शि । (22)

कुन्तकोपक्रमं वक्रोक्तिदर्शनं प्राच्यानां भामहादीनां नव्यानामानन्दवर्धनादीनामाचार्याणाञ्च सिद्धान्तेन व्यापिकायां वक्रोक्तावन्तर्भवयति । अत एव सर्वाङ्गिणी तदुद्भाविता वक्रोक्तिः । नहि वक्रोक्तेर्यादृक् स्वरूपं भामहाभिमतं तादृग्येव कुन्तकस्य । परं काव्यकाञ्चनकषाश्ममानिना तेन वक्रोक्तेः स्वरूपं प्रसार्य

(21) वक्रोक्तिजीवितम् 1-19

(22) मधुसूदनशास्त्री मिश्रा व्यक्तिविवेकः P.125

काव्यसौन्दर्याधायकं सर्वं तत्त्वञ्च वक्रोक्तिशरीरेऽन्तर्भाव्य परिपूर्णं काव्यदर्शनं वक्रोक्तिभङ्ग्या समुपस्थापितम्। भामहादीनामालङ्कारिकाणां मते काव्येऽलङ्काराणां प्राधान्यात् काव्यचारुत्वमलङ्कारेष्वेवावशिष्टम्। आनन्दवर्धनेन नव्येनालङ्कारिकेण वाच्यवाचकधर्माणामलङ्काराणां न्यग्भावः प्रतीयमानार्थस्यैव च काव्ये माहात्म्यं प्रादर्शि। प्रतीयमानार्थस्य प्राधान्ये सत्युत्तमं काव्यम्, अलङ्काराणामेव च चमत्कारेऽमुख्यं काव्यमिति तदीयं दर्शनं व्यवस्थितम्।(23)

पर कुन्तकेन वक्रोक्तिं काव्यात्मत्वं ब्रुवताऽलङ्काराणामपि काव्ये चारुत्वं व्यवस्थापितम्। तन्मते कविप्रतिभासंस्पर्शेन वक्रत्वं हि नाम शब्दार्थयोश्चारुत्वं यदा समुल्लसति, तदा सर्वमेव तत्काव्यमुक्तिवैचित्र्यवशात्तद्विदाह्लादकरम्। अतः काव्यस्य चारुता न केवलं प्रतीयमानार्थचमत्काराश्रिता, परं तदभावेऽपि यदि शब्दार्थयोर्वक्रभावः पदं निदधाति, तदाप्युक्तिवैचित्र्यवशात् काव्यं तादृगाह्लादकरं यादृक् प्रतीयमानार्थचारुत्वेन। एवमुक्तिवैचित्र्यप्राणं काव्यं न प्रतीयमानार्थेन नाप्यलङ्कारैः परं वक्रतामहिम्ना सौन्दर्यमश्नुते।

इत्थं कुन्तकेन ध्वन्यलङ्कारसिद्धान्तौ व्यापके वक्रोक्तिशरीरेऽन्तर्भावितौ। किं बहुना, भरतमुन्युत्सूत्रितं रसप्रस्थानमपि तेन वक्रोक्तावेव समावेशितम्।

यद्यपि वक्रोक्तिध्वनिसिद्धान्तयोर्मिथः सहोदरभावस्तथापि कुन्तकोद्घाटितवक्रोक्तिसिद्धान्तो ध्वनिकारोद्भावितध्वनिसिद्धान्ताद् दृश्यमानया रीत्या

(23)

भिधते। ध्वनिकारेण सहृदयहृदयकारकधिया काव्यस्य स्वरूपमुन्मीलितम्। विशदीभूतमनोमुकुरा वर्णनीयतन्मयीभवनयोग्यतावन्तः सहृदया एव काव्यस्य चारुत्वाचारुत्वयोः प्रमाणभूताः परीक्षकाः। ध्वनिसिद्धान्ते कविकर्मणो न कश्चिन्महिमा। अत एव ध्वनिसिद्धान्ते काव्यस्यास्वादयितुः सहृदयस्य हृदयाह्लादकत्वेनैव काव्यं परीक्ष्यते, न तु काव्यशिल्पिनः कवेः कर्ममुखेन। परं कुन्तकस्य दर्शने कविकर्मणः काव्ये परमं महत्त्वम्। कवेः प्रतिभैव साधारणाच्छब्दार्थानर्थाश्च स्वसंस्पर्शेन तथा योजयति यथा ते वक्रभावमापन्ना अपूर्वां काव्यस्य शोभां परिपुष्णन्ति। यावत् कवेः प्रतिभासंस्पर्शो न भवेत्तावत् एव शब्दास्त एवार्था अघटितपाषाणशकलकल्पा नावर्जयन्ति सहृदयान्। अतः काव्ये चारुत्वं कविकर्ममूलम्। तन्महिम्नाऽपूर्वो वक्रभावः शब्दार्थेषु समुल्लसति।

एवं यद्यपि कुन्तकस्य वक्रोक्तिदर्शनमशेषलक्ष्यव्यापित्वाद् व्यापकं सोपपत्तिकं चोपनिबद्धमस्ति, तथाप्यानन्दवर्धनव्यवस्थापितध्वनिपृष्ठसंलग्नत्वात् परवर्तिभिः काव्यशास्त्रज्ञैराचार्यैः ध्वनिरेव काव्याधिराजत्वेनाङ्गीकृतो वक्रोक्तिश्चोपेक्षिता।

---

सप्तमः अध्यायः।

उपसंहारः।

काव्यात्मदर्शने आनन्दवर्धनः अद्वितीय स्थानं अलङ्करोति। आचार्य कुन्तकः तस्य मार्गस्य अनुधावनं करोति। व्यक्तिविवेककारेणकृतं ध्वनिध्वंसनं आचार्येण न क्रियते। वक्रोक्तिजीविते ध्वन्यालोकस्य अनल्पदर्शनसङ्केतस्य मार्गं ददाति। सहृदयपक्षवादी कुन्तकः ध्वनिपक्षपाती च भवति। त्रिकाण्डध्वनेन आरभतः वक्रोक्तिजीवितस्य काव्यनिरूपणं रसध्वनौ विश्राम्यति।

वक्रोक्तिजीवितः सैद्धान्तिकरीत्या ध्वनिदर्शने आगमतः ह्रासः परिहरति। रसध्वनिमण्डलस्य बाह्ये बहुलः काव्यसञ्चयः तिष्ठतीति आनन्दवर्धनस्य विचारः आसीत्। किन्तु कुन्तकेन काव्यसञ्चयः मुख्यधाराङ्गत्वं प्राप्यते। व्यञ्जनाव्यापारमङ्गीकृत्य कुन्तकः वक्रोक्तिप्रकारस्य निरूपणं परामर्शति।

वक्रोक्त्यनुगृहीतः व्यञ्जनया निष्पन्नः व्यङ्ग्यार्थः ध्वनिकारः मुख्यतया अङ्गीक्रियते। अस्मिन् अवसरे वक्रोक्तिकारः व्यञ्जनानुगृहीतवक्रोक्तिः प्राधान्येन चर्वणाविश्रान्तिस्थानेन चमत्काराधानेन साक्षात्क्रियते।

वक्रोक्तिजीविते आचार्यकुन्तकः मार्गः गुणः इत्यादयः निष्कृष्य निरूपणं क्रियते। अपि च प्रसिद्धप्रस्थानव्यतिरेकिणः नूतनतत्त्वाः आविष्कृतं इति। इत्यादि प्रकरणे कुन्तकः ध्वनिकारसमानधर्माः एव स्वीक्रियते। भामह-दण्डि-वामन-

इत्यादिभिर्पूर्वसूरिभिः वैदर्भीपक्षपातपरं निरूपणं अनुपपन्नं त्यक्त्वा देशभेदमनुसृत्य मार्गभेदः सयुक्तिकं कुन्तकः खण्डयति। अनन्तरं प्रसिद्ध-काव्यमीमांसायाः शैलिविज्ञानं प्रतिपादयति।

कुन्तकाचार्यस्य वक्रोक्तिजीवितं आनन्दवर्धनाचार्यस्य ध्वन्यालोकस्य खण्डनग्रन्थो इति काश्चित् चिन्तासरणिः अस्ति। किन्तु पूर्वो-क्तविवरणात् सहृदयह्लादकः ध्वनिः कुन्तकेन वाक्य-वैचित्र्यहेतुभूतया वक्रोक्त्या अतीव महत्वेन पुनर्निर्मीयते इत्यवगन्तुं शक्यते। तत्र शैवदर्शने विद्यमानस्य स्पन्दसिद्धान्तस्य प्रभावमपि स्वी-कृत्य वक्रोक्तिं पोषयति कुन्तकः। एवं वक्रोक्तिः सर्वथा ध्वन्यालोकस्य पूरको ग्रन्थो भवतीति काव्यज्ञैः अवगम्यन्ते। एतत् वक्रोक्तिजीवितस्य विवर्तनकारेण कृष्णमूर्तिना तस्य आङ्गलभाषाविव-र्तने अङ्गीक्रियते। तदुक्तं तेन- "That Kuntaka is an anti-dhvani theorist is a concord of modern scholars which does not have any firm basis." and he continues, "the commends of the two theorists on these are also identical in spirit, though the one calls it Dhvani and other term it Vakrokti."(1)

---

(1) Vakroktijivita. Introduction. P. XVI.

# BIBLIOGRAPHY

## SANSKRIT


1. Anandavardhana : "Dhavyaloka", Chaukhamba Vidyabhavan, Varanasi

2. Kuntaka : "Vakroktijivitam" Chaukhamba Sanskrita Samsthan, 1990

3. Dandin : "Kavyadarsa",Chaukhamba Vidyabhavan,Varanasi 1992

4. Bhamaha : "Kavyalankara",Chaukhamba Vidyabhavan,Varanasi 1994

5. Mammata : "Kavyaprakasa", Chaukamba Samskrta Samsthan 1995

6. Rajasekhara : "Kavyamimamsa", Chaukamba Vidyabhavan, 1982

7. Nilakandasastri : "Dhvanyalokojjivani", Kerala University, 1981

8. Adyacharan jjha : "Bharatiyavangmayesu Rasa sidhantah", Rashtriya Samsthanam, New Delhi 1998

9. Vidvan V.N. Bhat, Prof. Nirmala V.Bhat, Smt. : "Kavyasastra vimarsah", Viswanathaprakasan, Shimoga, Karnataka 1996

10. Gayatridevi K, Dr. : "Kavyakalanidhi", Sarvani Printers, Sree Nagar, Visakhapatanam

Ravisankar Nagarah Dr. : "Vyanjanavimarsah", Vandand Prakasn, Delhi 1977

11. Bachulal Avasthijnan Dr. : "Dhvani Siddhanta tatha tulakniya Sahityacinatan" Madhyapradesh Hindi Grandh Academi, Bhopal 1972


## ENGLISH


1. Angaraj Chaudhary : "Comparative Aesthetics; East and West", Eastern

Book Linkers, 1991

2. Rajendran C. Dr. : "A study of Mahimabhatta's Vyaktiviveka", Printex India, Feroke 1991

3. Seturaman V.S : "Indian Aesthetics", Macmillan India Limited,1992

4. Krishnamurthy K. Dr : "Vakroktijivita of Kuntaka", Karnatak University Dharwar, 1977

5. Krishnamurthy K. Dr : "Dhvanyaloka of Anandava-Rdhana", Poona 1955

6. Narasimhaia C.D : "East West Poetics at work", Sahitya Academi 1994

7. Krishnamurthy K. Dr : "Studies in Indian Aesth-Etics and criticism", D.V.K Murthy, Mysore 1979

8. Krishnamurthy K. Dr : "Dhvayaloka and its crit-Ics", Kavyalaya Publishers, Mysore-4, 1968

9. Keith A.B : "A Hiistory of Sanskrit Literature", Oxford Uni-Versity Press, London 1920

10. De S.K : "Some Problems of Sanskrit Poetic", K.L Mukhopadhyay, Calcutta 1959

11. Raneiro Gnoli : "The Aesthetic Experience according to Abhinavagupta", Rome 1956

12. De S.K : "The Vakroktijivita - a treatise on Sanskrit Poetics by Rajanaka Kuntaka", K.L Mukhopadhyay, Calcutta 1961

13. De S.K : "History of Sanskrit Literature", University of Calcutta 1947

14. De S.K : "History of Sanskrit Poetics", Calcutta 1960

15. Raghavan V. : "Some concepts of Alankararasastra", Madras, Adyar 1942

16. Dwivedi R.C : "The Poetic Light", (The translation of Kavyaprakasa) Motilal Banarsidas

17. De S.K : "Sanskrit Poetics as a study of Aesthetic", Oxford University Press, Bombay 1963

18. Kane P.V : "History of Sanskrit Poetics", Delhi 1961

19. Krishnamurthy K. Dr. : "Essays in Sanskrit criticism", Dharwar 1964

20. Sankaran A. Dr. : "Some aspects of literary criticism in Sanskrit or the theories of Rasa and Dhvani", Madras 1929

21. Edwin Gerow : "Indian Poetics", Otto Harrasowitz, Wiesbaden 1977

22. De S.K : "History of Sanskrit Poetics", Firma, K.L Mukhopadhyay, 1960

23. Vijayavardhana G. : "Outlines of Sanskrit Poetics", Chaukhamba Sanskrit Series Office, Varanasi 1970

24. Chandrasekharan K. : "Sanskrit Literature", The P.E.N all India Cent-Re, Bombay 1951

25. Dwivedi R.C Dr. : "Principles of Literary criticism in Sanskrit", Motilal Banarasidass 1969

26. Varadachari V. Dr. : "A History of Sanskrta Literature", Ram Naram Lal Beni Prasad Publishers, Allahabad-2 1960

27. Krishnamachariar M. : "History of classical Sanskrit Literature", Moti

lal Banarasidas - Delhi 1989

28. Warder A.K : "Indian Kavya Literature" Motilal Banarasidas, Delhi 1989

29. Raghavan V. : "An introduction to Indian Poetics", Macmillian and company Ltd. 1970

MALAYALAM

1. Ayyappapanicker : "Indian Sahityasiddhantam Prasaktiyum Sadhyatayum", Kerala Bhasa Institute, Thiruvanantapuram 1999

2. Gopalapanicker N. Dr.: "Dhvanitatvodayam", Thiruvanatapuram 1990

3. Bhaskaran T. Dr. : "Bharatiya Kavya Sastram" Kerala Bhasa Institute, 1994

4. Sankunni Nair M.P : "Natakiyanubhavamenna rasam", Publication Department, Calicut University 1989